BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANḌITS OF THE BENARES SANSKRIT COLLEGE
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH M. A.
AND
G. THIBAUT PH. Dr.
*No. 44.*

# श्रीमद्याज्ञवल्क्यादिमहर्षिप्रणीतः शिक्षासङ्ग्रहः ।

## क्वचिद्व्याख्यानयुतः ।

श्रीमत्काशिकप्रधानपाठशालाधीतविद्येन श्रीमन्मिथिलामण्डलाधीशतो लब्धवै-
दुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसंस्थापितवेदविद्यालयाध्यापके-
न च पाठकोपाह्वश्रीमद्युगलकिशोरव्यासेन निर्म्मितशिक्षाकीर्त्ति-
प्रकाशाख्यटिप्पण्या समेतः शोधितः प्रकाशितश्च ।

# A COLLECTION OF ŚIKSHÁS
## BY YÁJÑAVALKYA AND OTHERS,
## WITH COMMENTARIES ON SOME OF THEM.

EDITED AND ANNOTATED BY PAṆḌIT YUGALAKIŚORA VYÁSA
LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

**Fasciculus IV.**

*BENARES:*
**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**
PRINTED AT THE BENARES PRINTING PRESS.
1892.

ठं॰ सङ्क्रमेषु ॥ ३२४ ॥ सङ्क्रमेषु पूर्वोक्तेषु यथासमाम्नातं क्रमशास्त्रानुसारेणावसानं स्यात् । विश्वधाः परमेण । ह्वार्षीच्छतधारम् । अत्र नावसानम् । ध्रुवेण धर्म्मणा । धर्म्मणेति धर्म्मणा । व्यशां२ ॥ऽअनु । अन्विच्यतु । अत्रावसानं भवति । सङ्क्रमेष्वित्युपलक्षणम् । अन्यत्रापि यथासमाम्नातमेव । अधुक्षः सा, साविश्वायुः । विश्वधायाऽइन्द्रस्य । अत्र नावसानम् । हव्यठं॰ रक्ष । रक्षेति रक्ष । यच्छन्ताम्पञ्च । पञ्चेति पञ्च । अत्रावसानम् । असन्देहार्थं प्रसङ्गात्क्रमसन्धानानि प्रदर्श्यन्ते । विश्वधाः परमेण । ह्वार्षीच्छतधारम् । सहस्रधारन्देवः । अधुक्षः सा । विश्वधायाऽइन्द्रस्य । राध्यतामिदम् । एमिकः । तस्मै कर्म्मणे । व्यास्त्रात्युष्टम् । अरातयऽउरु । एमि धूः । धूर्वीमो देवानाम् । देवहूतममहुतम् । हविर्द्धानँविष्णुः । हस्ताभ्यामग्नये । गृह्णामि भूताय । रश्मिभिर्हवीः । देवयुवँव्युष्माः । स्वाग्नये । अग्नीषोमाभ्यान्दैव्याय । वेत्त्वह्निः । वेत्त्वग्निः । प्रमीष्व हविष्कृत् । इहि कुक्कुटः । वह ध्रुवम् । वधायाग्ने । अन्तरिक्षन्वत्तम् । दिवँविश्वाभ्यः । वेत्तु धान्यम् । अव्यानाय दीर्घाम् । रसेन रेवतीः । पृच्यन्ताञ्जनयत्यै । वधः पृथिवि । मौगप । व्यद्धा-

समरणे । स्कन्दगायत्रेण । जागतेन सुद्धा । मा-
ऽऽस्यनिशिता । माऽऽस्यदित्यै । पश्याम्यग्ने: । य-
जुषेयजुषे सवितु: । त्वा तेज: ॥ ४२ ॥ इति द्विचत्वा-
रिंशत्क्रमसन्धानानि प्रथमाध्याये ॥ १ ॥ पतये गन्ध-
र्वः । ईडितऽइन्द्रस्य । दक्षिणो मित्रावरुणौ । अ-
भिशस्त्यै सवितु: । ध्रुवा ध्रुवा । माऽऽर्मि नम: । स-
चन्तामस्माकम् । अश्नाम्यैतम् । ब्रह्मणा तेन । ऊ-
ह्वाम्यग्नीषोमौ । जहामीन्द्राग्न्योरिन्द्राग्नी । इ-
न्द्राग्नी व्वसुभ्य: । अवताँव्यन्तु । मरुद्भिरिन्द्र: ।
तस्मै पोषाय । व्वर्त्तेग्ने । हिमाऽअचारिषम् । व्वे-
दिषदो ये ॥ १९ ॥ इत्येकोनविंशतिर्द्वितीयाध्या-
ये ॥ २ ॥ उषसा सूर्य्य: । गृहपते पुरीष्य: । पति-
वेदनमित: ॥ ३ ॥ इतित्रीणि तृतीये ॥ ३ ॥ चतुर्थे क्र-
मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्थामि । रज:श-
या हरिशया । देववीतये सिंहि । ध्रुवो व्वैष्णव-
म् । ध्रुवऽऐन्द्रम् । हव्यवाहन: स्वात्र: ॥ अभूद्वय-
थायथम् ॥ इतिसप्त पञ्चमे ॥ ५ ॥ षष्ठे न सन्ति ॥ मादय-
स्वोदानाय । भूम्महेन्द्राय । इति द्वे सप्तमे । ७ ।
अष्टमे क्रमसन्धानाभाव: ॥ इन्द्रस्य सत्यप्रसव: ।इन्द्रं-
व्वाजजित: । इति द्वे नवमे ॥ ९ ॥ दशमे क्रमसन्धा-
नाभाव: ॥ १० ॥ जागतेन हस्ते । हिरण्ययीमानुष्टु

भेन । इति द्वे एकादशे ॥ ११ ॥ परिचिल्लोक-
म् । १ । इत्येकं द्वादशे ॥ १२ ॥ दिशामि साहस्र-
म् । गयमृत्स्नायुम् । उष्ट्रमजः । शरभन्त्वम् । इति
चत्वारि त्रयोदशे ॥ अन्तरिक्षँव्वायुः ॥ वायूराज्ञी ।
बृहती नभः । इति त्रीणि चतुर्दशे ॥ १४ ॥ इध्मने-
देवः । रथेचित्रो मेनका । असमरथः प्रम्लोच-
न्ती । अरिष्टनेमिर्व्विश्वाची । सुषेणऽउर्व्वशी । शै-
शिरौ परमेष्ठी । दिवः सूर्य्यः । दिवन्भुवे । इत्यष्टौ
पञ्चदशे । १५ । षोडशसप्तदशयोर्न्न सन्ति ॥ १६ ।१७
स्तोमः । रथन्तरँव्वेट् । १८ । इति द्वे अष्टाद-
शे । १९ । एकोनविंशतिमेऽभावः । २० । व्वायु-
र्ज्जाग्रत् । स्वप्ने सूर्य्यः । शूद्रेऽर्य्ये । आपोऽयच्चि ।
इति चत्वारि विँशतिमे । २१ । एकविंशतिमेऽभा-
वः ॥ २१ ॥ प्राणाय यत्ते । इति द्वे द्वाविंशे । २२ ।
चतुष्पदश्चन्द्रमाः । चन्द्रमा रात्रौ । व्वायुः सूर्य्यः ।
इति त्रीणि त्रयोविंशे । २३ । चतुर्व्विंशतिपञ्चविं-
शतिषड्विंशतिसप्तविंशत्यध्यायेषु क्रमसन्धानाभा-
वः । २४ । २५ । २६ । २७ ॥ शुचिसुप्सिाहा ।
देवौ चित्रभा । इति द्वे अष्टाविंशे । २८ ॥ ऊ-
नत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशच्चतुस्त्रिंशत्प-
ञ्चत्रिंशत्स्वध्यायेषु क्रमसन्धानाभावः । २९ । ३० ।

। ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । ईमहे । इति द्वे षट्त्रिंशे । ३६ । पाहि मधु । स्वाहा रात्रिः । इति द्वे सप्तत्रिंशे ॥ ३७ । सरस्वत्यसौ । इत्येकमष्टत्रिंशे । ३८ । एकोनचत्वारिंशे क्रमसन्धानाभावः । ३९ । अविद्वद्यांविद्वद्यायाम् । ओम् ३ क्रतो । स्मर क्लिबे । क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशे । ४० । इति पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एभ्योऽन्यत्र संहितावसानानुसारेण पाराशरीयचरणानुसारेण च निर्णयः कर्त्तव्यः । इति क्रमसन्धानानि समाप्तानि ॥ अथोष्मऋकारोपरितनरेफोच्चारणविषयो व्याख्यायते । उक्तं च प्रतिज्ञासूत्रे । अथापरान्तस्थस्यायुतान्यहलःसंयुक्तोष्मऋकारैरेकारसहितोच्चारणमेवं तृतीयान्तस्थस्य क्वचित् । अस्यार्थः । अपरान्तस्थस्य रेफस्य अन्यहला असंयुक्तस्य ऊष्मभिर्ऋकारेण संयुक्तस्य एकारसहितं रे इत्युच्चारणं कर्त्तव्यमिति शेषः । उदाहरणम् । दर्शतमित्यत्र दरेशतमित्ययं पाठो न रेफसहितः । एवमन्यत्र । वर्षो वर्षीयसि । वर्हिः । निर्ऋते । सकारोदाहरणे षकारोदाहरणमेव भवति । अयुतान्यहलइति किम् । वर्ष्याय । १ अत्र माभूत् । संयुक्तस्येति किम् । ऊर्ज्जेत्वा । एवं संयुक्ता-

संयुक्तस्थले तृतीयान्तस्थस्य वकारस्य क्वचिल्लघ्व्यानुरोधेन पूर्वोक्तमेकारसहितोच्चारणं कर्त्तव्यम् । क्वचिदित्युदाहरणानि हल्परमितिज्योत्स्नाकारः । यथा शतवल्शाइत्यत्र वलेशाइत्युच्चारः । सहस्रवलेशाः । उपवल्हामसि । अत्रास्मिन्सूत्रे ऊष्मऋकारोपरितनरेफस्य प्राक् एकारसहितोच्चारणं कर्त्तव्यमित्युक्तम् । तथा च प्रतिज्ञासूत्रभाष्ये अनन्तयाज्ञिकैर्माध्यंदिनशिक्षाया वचनं गृहीतम् ॥ तदेवाह । शषसहा यत्र दृश्यन्ते रेफेणाक्रान्तमस्तकाः ॥ स्वरभक्तिं प्रयुञ्जीत संयोगे नैव कारयेत् । १ । अत्रोष्मणामेव ग्रहणं न ऋकारग्रहणम् । तथा च प्रातिशाख्ये । रलाटलवर्णाभ्यामूष्मणि स्वरोदये सर्व्वत्र । अस्यार्थः । रेफलकारौ ऋलृवर्णाभ्यां ऋलृसदृशश्रुतिभ्यां यथासंख्यं व्यवधीयेते । ऊष्मणि परभूते स्वरोदये स्वरपरे इत्यर्थः । सर्व्वत्र संहितायां पदे च । गार्हपत्यः । अत्र हकाररेफयोरन्तरापि स्वरभक्तिः सती रेफहकारयोः संयोगं न विहन्ति । एवमन्यत्रापि द्रष्टव्यम् । शतवल्शः । वल्हामसि । स्वरोदयइति किम् । स्टर्ँव्वर्षैः । पार्श्वतः । दिवो वर्ष्मन् । अभ्युभिर्ह्रादुनीः । अत्रापि ऋकारान्तग्रहणं नास्ति । केवलोष्मणामेव ग्रहणम् । तथा च नवाङ्कसूत्रे । अह-

लशल्यूर्द्धरेफस्य सैकारः प्राक्च । अस्यार्थः । पदाद्य-न्तमध्ये हलिवहीनस्य शलि ऊर्ध्वरेफस्य सैकारः प्रागु-च्चारः स्याच्छन्दसि । शलिति शषसहा ज्ञेयाः । द-र्शतमिति नतु सोर्ध्वरेफोच्चारः । ऽहार्षीत । षकार-स्योदाहरणमेव सकारस्य कथं इणकवर्गाभ्यां परस्य सस्य मूर्द्धन्य इति कृत्वा रेफस्त्विणमध्ये वर्त्तते तर्हि रेफात्परो यः सकारः स मूर्द्धन्य इतिकृत्वोभयोरेकमे-वोदाहरणम् । बर्हिषे त्वा । शतवल्शेत्यत्र वल्शेत्यु-च्चारः । एवमन्यत्रापि । ऋऌवर्णयोर्मिथः सावर्ण्या-ल्लकारस्यापि प्राक्सैकारोच्चारः । न तु संयुक्तोच्चारः । अहलिति किम् । यज्ञपतिऽर्हार्षीत् । शलीति किम् । ऊर्ज्जं त्वा । अत्रापि ऋकारग्रहणाभावः । एतदर्थं के-शवीशिक्षायाम् । विहलशल्यूर्द्धरेफो यः सैकारः प्रा-क्समुच्चरेत् । अत्रापि ऊष्मणामेव ग्रहणमस्ति । त-था च लघुमाध्यन्दिनीयशिक्षायाम् । रेफो रेकारमा-प्नोति शषहेषु परेषु च ॥ ददर्श वर्षो अर्हाच्च स्वंयोगं नैव कारयेत् । १ । वर्ष्यन्वर्षीयान्नर्हदा चायं प्रत्युदा-हृतिः । लकारोऽपि च सावर्ण्यादेकारसहितो भवे-त् । २ । शतवल्शा वल्शामसि तत्र तावदुदाहृतिः । अत्रापि ऋकारग्रहणं नास्ति । तथा च याज्ञवल्क्य-शिक्षायाम् । रलाभ्यां परऊष्माणो यत्र स्युः स्वरितोद-

या: ॥ स्वरभक्तिरसौ ज्ञेया पूर्व्वमाक्रम्य पद्यते । ३ । स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् । इकारं चाप्युकारं च ग्रस्तदोषं तथैव च । ४ । उभयोर्मध्ये हि एकार: सैव स्वरभक्ति: । अत्रापि ऋकारग्रहणाभाव: । अमरीशिक्षाऽप्येतदर्थे । रकारोऽथ लकारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पूर्व्वमाक्रम्य पद्यते ॥ ५ ॥ ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा । व्वर्षी व्वर्षीयसि व्हार्षीच्छतवल्शोऽपि सिध्यति । ६ । ऊष्मणामुपरिष्टस्तु रेफो याति रेवर्णताम् । रेफत्वं पुनरायाति यद्यूष्माणोऽन्यसँय्युता: । ७ । अत्रापि ऋकारग्रहणाभाव: । अत्र सिद्धान्त: । रेफारोच्चारणे भगवता कात्यायनेन प्रातिशाख्यसूत्रे ऊष्मणामेव ग्रहणं कृतम् । तथा च याज्ञवल्क्यमाध्यन्दिनादय: शिक्षाकर्त्तारऊष्माणामेव ग्रहणं कुर्व्वन्ति । एकस्मिन्नेव प्रतिज्ञासूत्रे ऋकारोष्मणां ग्रहणमस्ति। अतो वैदिका विकल्प इत्याहु: । तथा च कात्यायनेन प्रातिशाख्यसूत्रेऽप्यादृतं याज्ञवल्क्यमाध्यन्दिनादिभि: शिक्षासु च गृहीतं अनादिसम्प्रदायागतं यन्मतं तत्सर्व्वैर्वैदिकैर्ग्राह्यमिति स्पष्टं प्रतिभातीत्यलमतिप्रसङ्गेन । अत्र ऋकारोच्चारणे विशेष: । तथा च प्रतिज्ञासूत्रे "ऋकारस्य तु सँय्युक्तासँय्युक्तस्याविशेषेण

सर्व्वत्रैवम्" । अस्यार्थः । पदान्तमध्येषु संयुक्तासंयुक्तस्य ऋवर्णस्य रेकारः स्यात् । सर्वत्र संहितायां पदेच । यथा कृष्णोऽसीत्यत्र क्रेष्णोसीत्युच्चारः । ऋत्विये यतः । अत्र रेत्विय इत्युच्चारः । एवं "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमिति" वार्त्तिकेन लृकारस्यापि ले इत्युच्चारः । क्लृप्तमित्यत्र क्लेप्तमित्युच्चारः । एतदर्थे केशवीशिक्षा । ऋकारहलियुग्युक्च रेकारश्छन्दसि स्मृतः । इति ऋकारोच्चारणे विशेषः ॥ अथ जकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । "अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तासंयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण च विशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवम्" ॥ अस्यार्थः । अन्तस्थानामाद्यस्य यकारस्य पदादौ विद्यमानस्य अन्यहला अन्यव्यञ्जनेन असंयुक्तस्योच्चारणे जकारोच्चारणं स्यात् । रेफऊष्मणामन्त्यो हकारस्य आभ्यां युक्तस्यापि अविशेषेणादिमध्यावसानेषु पदस्य जकारोच्चारणं स्यात् । ऋकारेण युक्तस्य अविशेषेण अन्यहला संयुक्तस्य असंयुक्तस्य वा आदिमध्यान्तेषु जकारोच्चारणम् । क्रमेणोदाहरणानि । यन्ते । युञ्जते । घृताचीर्य्यन्तु हर्य्यत । सूर्य्यः । कृणुह्यद्ध्वरम् । प्रवाह्याय । सदोऽस्यृतस्य । व्यृद्धै । पदादि-

स्यस्येति किम् । अयजन्त । अन्यहलीत्यादिकिम् । अस्मिन्न्यञ्ज्ञे । एवं पदादिमध्यान्तेषु यकारद्विर्भावे द्वित्वे सति ज्ञेयम् नृपाय्यम् । धाय्या रूपम् । तँय्यज्ञम् । जरायुत्वृसि । अत्र स्वरात्संयोगादिरिति द्वित्वम् । तथा च याज्ञवल्क्यः । पादादौ च पदादौ च संयोगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ युक्तेन मनसा तद्वत्तत्त्वा यामि तथा परम् ॥ अनूकाशेन बाह्यस्य योगे योगे निदर्शनम् ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा वियत्पदच्छेदात्परं भवेत् ॥ तथा च कात्यायनशिक्षायाम् । आद्यान्तस्यस्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो यस्तु तस्य छन्दसि नेष्यते ॥ पदस्याद्यन्तमध्ये स्याद्वर्णैः संयुतस्य च ॥ द्विर्भावेऽप्येवमेव स्यादिति कात्यायनश्रुतिः ॥ उपसर्गात्परस्य न जकारोच्चारणम् । यथा अभियज्ञम् । द्विर्भावेऽयन्निषेधो न । संव्योमि । अतएव नवाङ्कसूत्रे केशवेन सम्पूर्वयोश्चेत्युक्तम् । यज्ञञ्च मानुषाणां तथा च योजान्न्विन्द्र, इत्यत्र पादादिस्थत्वात् । उपसर्गात्परस्येऽपि जकारोच्चारः । उप यज्ञठं० हविरित्यत्र पादादिस्थत्वाभावाद्यकारत्वमेव । पदादित्वेन सिद्धे पादादौ पुनर्ज्जकारोच्चारणविधानम् । पादादौ च पदादौ चेति याज्ञवल्क्योक्तेः ॥ अतो

ज्योत्स्नाकृता स्तुतीरूप यज्ञमेव गृहीतम् । अतए-
वामरेशीशिक्षायाम् । अनुयोजान्त्विन्द्र ते तु उपय्
ज्ञं विना तथा ॥ अथो पूर्वकस्य न । उक्तं च । अथ
मासनशब्देभ्यो विभाषाऽऽम्रेडिते यवौ । यथा । अथो
ये । मा यज्ञम् । स योजते । मनो न येषु अत्र य-
कारोच्चारणे विकल्पः ॥ विकल्पविषये सम्प्रदायए-
व शरणम् । इति जकारोच्चारणविषयः । अथ वका-
रोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । अथान्त्यस्था-
न्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमल-
घुवृत्तिभिरुच्चारणम् । अन्तस्थानामन्त्यस्य वकारस्य
अपदादौ मध्ये अन्ते च विद्यमानस्य यथाक्रमं गुरुम-
ध्यमलघुवृत्त्या चोच्चारणम् । यथा । व्वायवः । व्वा-
यव्ट्टतस्पते । तथा च याज्ञवल्क्यः । वकारस्त्रिविधः
प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघुर्मध्ये प-
दान्ते तु लघूतरः ॥ सन्धिजौ तु पदान्तीयावुपसर्गप-
रौ लघु ॥ अथ मासनशब्देभ्यो विभाषाऽऽम्रेडिते य-
वौ । ये ये पदादिस्थयकारविषये निषेधास्ते वकारे-
ऽपि ॥ अथा वयम् । तथा च माध्यन्दिनशिक्षायाम् ।
गुरुर्वकारो विज्ञेयः पदादौ पठितो भवेत् । व्विष्णा-
ड्दाहृतिर्ज्ञेया सविताऽन्तर्लघुस्स्मृतः । पदान्ते वै लघु-
तरस्तव व्वायव्ट्टतस्पते । उपसर्गपरो यस्तु स वकारो

लघुर्मतः । वो वां वा वै मन्त्रपाठे लघवो गुरवः पदे ॥ तथा चामोघनन्दिन्यमरेशशिक्षयोः । त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पार्था ई-षत्स्पृष्टा इति स्मृताः । देवो वः सविता या वाँ व्रातोऽसि मं व-ति तथा न वै ॥ अत्रापि सम्पूर्वकस्य वकारस्य द्वित्वमे-व । यथा सँव्वाम् ॥ इति वकारोच्चारणविषयः ॥ अथ षकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । अथो मूर्द्धन्योष्मणोऽसँय्युक्तस्य टुक्ते सँय्युक्तस्य च खकारो-च्चारणम् । अथान्तस्थकथनानन्तरं मूर्द्धस्थानस्योष्मणः षकारस्य असँय्युक्तस्य टवर्गं विना अन्यहला संयुक्तस्य च खकारोच्चारणम् । इषे त्वा । व्विभर्ष्यस्त्वे । शु-ष्क्स्याय । टुक्ते किम् । प्रत्युष्टम् । श्रेष्ठतमाय । कृष्णः । क्षकारे षकारवत् । अवयवसम्भावनेऽपि मातृकादौ गणनात् । एकवर्णत्वात् । अवयविभागा-भावेन खकारोच्चारणम्भवति । ककारयोगे खकारो-च्चारणाभावइति नियमस्तु न शुष्कमित्यादौ विपरी-तसँय्योगे ककारयोगेऽपि खकारोच्चारणं भवति । तथा च कात्यायनशिक्षायाम् । असँय्युक्तस्य मूर्द्धन्यो-ष्मणः खोच्चारणम्मतम् ॥ टुक्ते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥ छन्दसीत्येव खोच्चारो लोके प्रकृ-तिरिष्यते ॥ इति षकारोच्चारणविषयः । इमे रुवे

नियमा वह्मयज्ञादौ अर्थविचारे तु प्रकृत्या ये वर्णा-
स्त एव न त्वर्थभेदः ॥ परसवर्णोऽत्यप्रकृत्या चान्यत्र ।
शाषसहेभ्योऽन्यत्र तु मकारस्य परपञ्चमविधानात्स्प-
ष्टमुच्चारणे प्राप्ते परस्य वर्णस्य सवर्णो यः पञ्चम-
स्तस्य तस्मादृश्यवोच्चारणं स्यात् । तञ्ज्ञानम् । इत्यादौ
वाजाञ्जयतु इत्यादिवत् लकारादेर्न स्पष्टमुच्चारणम् ।
विसर्गे वीप्रद्विरामः ॥ विसर्गेषु नान्तरीयकार्द्धमात्रा-
कालापेक्षया किञ्चिदधिककालो विरामः । अपहृत्य तं
कृत्वाऽग्रिमवर्णोच्चारणं कार्यम् । वसोः पवित्रम् ।
याः फलिनीः ॥ पदाद्यस्य सँयुक्ताकारस्येषद्दीर्घता
च भवति ॥ परस्यादिभूतस्य हल्सँयुतस्य अकारस्य
ह्रस्वस्येषद्दीर्घता च एकमात्राकालापेक्षया किञ्चि-
दधिककालोच्चारणं स्यात् । वसोः पवित्रम् । पदा-
दिस्थस्येति किम् । वायवः । हल्संयुक्तस्य किम् ।
अनुनः । अकारस्येति किम् । ध्रुवाः ॥ अथ जटा-
द्यष्टविकृतीनां लक्षणान्युच्यन्ते । तत्र विकृतीनां पा-
ठे फलं पङ्क्तिपावनत्वम् । जटादिविकृतीनां ये पा-
रायणपरायणाः ॥ महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः प-
ङ्क्तिपावना इत्यादिव्यपुराणात् । अन्यान्यपि वि-
ष्णुलोकानि फलानि वाराहपुराणपाराशरस्मृत्यादि-
षु । तासान्नामानि प्रदर्श्यन्ते । जटा माला शिखा रे-

खा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः । तत्र प्रथमत्वाज्जटालक्षणम् । क्रमं यथोक्तं प्रब्रूयाद्व्युत्क्रमेण क्रमेण च ॥ सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः ॥ अस्यार्थः । क्रमं यथोक्तं द्वित्रिचतुष्क्रमात्मकं पुनश्च तमेव वैपरीत्येन पुनश्च क्रमेण एवं त्रिवारं सर्वसन्धिषु लक्षणयुक्तं पठेत्सा जटा इति तत्वज्ञैरुच्यते । वायवस्थ स्थ वायवो वायवस्थ । इत्यादि । अथ जटायां पठ्यमानान्क्रमान्नामतो निर्दिशति । अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा ॥ सङ्क्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ॥ वायवस्थ । इत्यनुक्रमः । स्थस्थ । इत्युत्क्रमः । स्थवायवः । इतिव्युत्क्रमः । वायवो वायवः । इत्यभिक्रमः । इमे पञ्चक्रमा एव पृथक्पृथक् पठनेन पञ्चसन्धिरिति वैदिकैः पठ्यते ॥ स्वापूर्वांशं पदद्वन्द्वं स्वागर्भे त्रिचतुष्क्रमे ॥ पुनरुक्तमसन्देहार्थं जटात्वं न चार्हति ॥ सुआ इति पदद्वयगर्भे त्रिक्रमे सोपूणः सोमेनानचित इत्यादौ तथा चतुष्क्रमे गोमदूषुणा सख्या इत्यादौ सुआ पूर्वांशं पदद्वयं असन्देहार्थं द्विपदत्वभ्रमवारणाय सुनः आतनचिम । इति पुनरुच्चारितं जटाभावं नार्हति । असन्देहार्थमिति हेतुगर्भं विशेषणम् । यथा उदुत्यमित्यादौ द्विपदत्वभ्रमवार-

णाय ऊँइत्यूँ । इति मध्यस्थस्य वेष्टनम् । तथा इदं न तु क्रमः । अतो जटा न कार्या ॥ अथ माला सा द्विविधा पुष्पमाला क्रममाला च । पुष्पमाला लक्षणमाह । मालामालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ॥ आवर्त्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः ॥ सुसमिद्धाय शोचिषे । शोचिषे सुसमिद्धाय । इत्यादि । अथ क्रममाला । ब्रूयात्क्रमविपर्यासावर्द्धर्चस्यादितोऽन्ततः ॥ अन्तं चादिं नयेदेवं क्रममालेति गीयते ॥ अर्द्धर्चस्यादितः क्रमं अंततो विपर्यासं क्रमेण पठेत् । अनेन प्रकारेण क्रममन्तं नयेत् । विपर्यासमादिं प्रापयेत्सा क्रममालेति ऋषिभिरुच्यते । चिरं०शद्धाम । धीयतऽइति धीयते । धाम व्वि । धीयते पतङ्गाय । व्विराजति । पतङ्गाय व्वाक् । राजति व्वाक् । व्वाग्राजति । व्वाक्कपतङ्गाय । राजति व्वि । पतङ्गाय धीयते । व्विधाम । धीयतऽइति धीयते । धाम त्रिं०शत् । इत्यादि । अथ शिखा । पदोत्तरां जटामेव शिखामार्याः प्रचक्षते ॥ पूर्वोक्तां जटामेव अन्ते एकपदाधिकां शिखां विकृतिं मुनय आहुः । अन्तश्चरति चरत्यन्तरन्तश्चरति रोचना । इत्यादि ॥ अथ रेखा । क्रमाद्द्वित्रिचतुष्पञ्चपदक्रममुदाहरेत् ॥ पृथक्पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात् ॥ क्रमेण द्विपदत्रिपद·

चतुष्पदपञ्चपदक्रमानुक्त्वा प्रतिक्रमे पृथक्पृथक्विपर्या-
सेन पठित्वा पुनः क्रमं पठेत्तां विकृतिं रेखामाहुः ।
व्विद्मञ्जाते । तेव्विद्म । व्विद्मञ्जाते । तेऽअग्ने त्रे-
धा । त्रेधाग्ग्ने ते । तेऽअग्ने । अग्ने त्रेधा । त्रेधा त्र-
याणि व्विद्मा ते । ते व्विद्म त्रेधा त्रयाणि । त्रयाणि
व्विद्म । व्विद्मञ्जाते । ते धाम व्विभृता पुरुत्रा ।
पुरुत्रा व्विभृता धाम ते । ते धाम । धाम व्विभृता ।
व्विभृता पुरुत्रा । व्विभृतेति वि । भृता । पुरुत्रे-
ति पुरु । त्रा । व्विद्मञ्जाते । ते व्विद्म । व्विद्मञ्जाते ।
ते नाम परम् । परमन्नाम ते । ते नाम । नाम पर-
मम् । परमङ्गुहा यद्विद्म । व्विद्म यद्गुहा परमम् ।
परमङ्गुहा । गुहा यत् । यद्विद्म । व्विद्मञ्जा तमुत्सँ-
य्यतऽआजगन्थ । आजगन्थ यतऽउत्सन्तँव्विद्म । व्वि-
द्मञ्जातम् । तमुत्सम् । उत्सँय्यतः । यतऽआजगन्थ
आजगन्थेत्या । जगन्थ ॥ अथ ध्वजः । ब्रूयादादेः क्र-
मं सम्यगन्तादुच्चारयेदिति ॥ वर्गे वा ऋचि वा यस्य
पठनं स ध्वजः स्मृतः ॥ वर्गे ऋचि वा आदेः क्रमं अ-
न्तपर्यन्तं ब्रूयात् । अन्तात्सम्यग्यथोक्तं क्रममेवोच्चार-
येत् । आदिपर्यन्तं पठेत् एवं यस्य पठनं स ध्वजना-
मा विकृतिः । व्विष्णोः कर्माणि । सखेति सखा ।
कर्माणि पश्यत । युज्यः सखा । पश्यत यतः । इन्द्र-

स्य युज्य. । यतो व्रतानि । पस्पशऽइति पस्पशे । व्रतानि पस्पशे । व्रतानि पस्पशे । पस्पशऽइति पस्पशे । यतो व्रतानि । इन्द्रस्य युज्यः । पश्यत यतः । युज्यः सखा । कर्म्माणि पश्यत । सखेति सखा । विष्णोः कर्म्माणि ॥ अथ दण्डः । क्रममुक्त्वा विपर्य्यस्य पुनश्च क्रममुत्तरम् ॥ अर्द्धर्चा-देवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ क्रममुक्त्वा अर्द्ध-र्चात् । अर्द्धर्चादिपर्यन्तं पुनः पुनर्विपर्यस्य पुनः क्रमं अर्द्धर्चसमाप्तिपर्य्यन्तं पठेत् एवमुक्तो विकृति-विशेषो दण्ड इत्युच्यते ॥ यज्ञानः । नो यज्ञ । यज्ञा-नः । नो मित्रावरुणा । मित्रावरुणा नो यज्ञ । यज्ञा-नः । नो मित्रा वरुणा । मित्रावरुणा नो यज्ञ । यज्ञा-नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञ । मित्रावरुणा नो यज्ञ । यज्ञानः । नो मित्रावरुणा यज्ञ । यज्ञा देवान् । अनेन प्रकारेण अर्द्धर्चसमाप्ति-पर्य्यन्तं पठेत् ॥ अथ रथः ॥ समे ऋचौ गृहीत्वा च रथवच्चलति क्रमः ॥ पादशोऽर्द्धर्चशो वाऽपि सहोक्त्या दण्डवद्रथः ॥ ऋचि अर्द्धर्चि पादे वा क्रम-विपर्यासौ दण्डवत्सहोक्तौ चेत्स विकृतिविशेषो रथ इ-त्युच्यते । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपन्धाना-नाम् । रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ-

रूपम् । रूपङ्कुवलम् । रूपम्बदरम् । कुवलꣳ रूपन्धानानाम् । बदरꣳ रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपं कुवलम् । रूपम्बदरम् । कुवलम्परीवापस्य । बदरमुपवाकाः । परिवापस्य कुवलꣳ सक्तूनाम् । धानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपङ्कुवलम् । रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवाकाः करम्भस्य । गोधूमाः परिवापस्य कुवलꣳ रूपन्धानानाम् । करम्भस्योपवाका बदरꣳ रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपं कुवलम् रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवाकाः । परीवापस्य गोधूमाः । उपवाकाः करम्भस्य । परिवापस्येति परि । वापस्य । उपवाकाऽइत्युप । वाकाः । गोधूमाऽइति गोधूमाः । करम्भस्येति करम्भस्य । ज्योत्स्नायां प्रकारत्रयेण रथउक्तः स तत्रैव द्रष्टव्यः । अथ घनः स द्विविधः । अन्तात्क्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् ॥ आदिक्रमन्नयेदन्तं घनमाहुर्मनीषिणः ॥ अतिथिमित्यतिथिम् । बोधयतातिथिम् । घृतैर्बोधयत । दुवस्यत घृतैः । अग्निन्दुवस्यत । समिधाग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत घृतैः ॥ घृतैर्बोधयत । बोधयता तिथिम् । अतिथिमित्यतिथिम् । इत्यादि ॥ अथ द्वितीयः । शिखासुत्वा

विपर्य्यस्य तत्पदानि पुनः पठेत् ॥ अयं घनइति प्रोक्ता इत्यष्टौ विकृतीः पठेत् ॥ शिखां पूर्वोक्तामुच्चार्य्य विपर्यासेन तानि पदान्युच्चार्य पुनः क्रमेण तानि पदान्युच्चारयेत् । अयं घनइत्यृषिभिः प्रोक्तः । दस्रा युवाकवो युवाकवो दस्रा दस्रा युवाकवः सुताः सुता युवाकवो दस्रा दस्रा युवाकवः सुताः । इत्यादि । शेषं ज्योत्स्नादिषु ज्ञेयम् ॥ शाके दृग्व्भ्राष्टभूमिते शुभे विक्रमवत्सरे ॥ माघे मासि सिते पक्षे प्रतिपद्भानुवासरे ॥ १ ॥ प्रातिशाख्यप्रदीपाख्या शिक्षेयं रचिता शुभा ॥ गोडशे इत्युपाह्वेन बालकृष्णेन धीमता ॥ २ ॥ श्रीसदाशिवपौत्रेण श्रीप्रभाकरशर्म्मणा ॥ कृपया मह्यमादत्ता मुद्रायन्त्रे प्रकाशिता ॥ ३ ॥ युगलप्राक्किशोरेण पाठकेनानुजेन च॥विन्ध्येश्वरस्य पुत्रेण श्रीव्यासोपाधिधारिणा ४ ॥ सरयूपारिणा सम्यग्वेदविद्यालयस्य च ॥ अध्यापकेन छात्राणां शीघ्रं सम्बोधनायच ॥ ५ ॥ शिक्षासङ्ग्रहमध्ये तु ह्येतस्याः सङ्ग्रहः कृतः ॥ एतदग्रे तु वेदस्य श्रीमाध्यन्दिनशाखिनः ॥ ६ ॥ परिभाषाख्यसूत्रं तु श्रीमद्रामस्य निर्मितम् ॥ तदग्रे सूत्रशेषस्य कारिका सुप्रकाशिका ॥ ७ ॥ अथ वेदपरिभाषासूत्रशिक्षां व्याख्यास्यामः ॥ इषे त्वा । १ । अनुवाकः । पदानि । ३५ ॥

शुठिषस्त्व: । १ । व्वसोः पवित्रम् । ३ । ४२ । वा-ढक्षाचा । २ । अग्ने व्व्रतपते । ७ । १०६ । ऐभा-तङ्मी: । ३ । पवित्रे स्त्थ: । २ । ५४ । डीणडाडी । शर्म्मोऽसि । ३ । ६३ । जीवतिढ: । १३ । धृष्टि-रसि । २ । ४४ । वीचक्ड । २ । धिषणाऽसि । २ । ३६ । गृवागर्ङिः । ७ । सँव्वपामि । डगेन चक्षि । २ । आददे । ५ । १०२ । आभृठुषी: । ७ । अनिशितो-ऽसि । ३ । ५१ । ङजञञिः । ७ । ऋच: । ३१ । अनुवाका: । १० । पदानि । ६१४ ॥ कृष्णोऽ-सि । ६ । १२४ । ढीवादिप् । १२ । अग्ने व्वाजजि-त् । ३ । ६५ । चुढाचीपः । १ । मर्यादम् । ५ । १० भौवाक्षणी: । ५ । अग्नीषोमयो: । ५ । १२२ । ठाभाढ्पू: । २ । अग्ने दब्धायो । ४ । ७८ । छो-मटाङ: । ३ । सँव्वर्च्चसा । ४ । ८६ । जोवङेतू: । ४ अग्नये कव्व्यवाहनाय । ६ । जोङ्ढड: । १ । ऋ-च: । ३३ । पदानि । ६६८ ॥ समिधाग्नि-म् । ४ । ३६ । गृवाङक्षि: । ३ । भूर्भुव: । ४ । ५० घौडाजिचे । अग्निर्ज्ज्योति: । २ । ३७ । गेमग-अ: । १ । उपप्रयन्त: । २६ । ३६७ । ले । १४ । स्व: सुप्रजा: । ३ । ४२ । घाणिणाक्षी । ४ । गृहा मा । ३ । ५३ । ङानीभाजा । २ । प्रवासि-

नः ॥ ५ । ७२ । क्षाभिढाक्षुः । १ । पूर्णा द-
र्व्वि । २ । ३३ । गिकङ्घः । १ । अचन्नमीमद-
न्त । ६ । ६८ । चैघोचिजा । ४ । एषते । ७ । ८९ ।
भ्रोमाफशे । ४ । ऋचः । ६२ । अनुवाकाः । १० ।
पदानि । ८ । ५६ ॥ एदम् । २ । चादिक्षाढी । ४ ।
हृत्रस्यासि । ४ । ४५ । घुत्तजघेः । ३ । आकूत्यै प्र-
युजे । १२ । ३६ ॥ गूनगिखः । ३ । ऋक्सामयोः
शिल्पे । २ । ४७ ॥ घेटघीगुः । ५ । व्रतं कृणु-
त । ६ । १३६ । डूत्सुथुधूः । ५ । एषा ते । ५ । ९७ ।
छेथञटि । ४ । व्यस्व्यसि । ३ । ६३ । चिणाङ्क्षाः ।
३ । एष ते । २ । ५५ । ङुनडिङिः । ३ । शुक्र-
न्त्वा । ४ । ८१ । जणुञिठी । २ । अदित्या-
स्त्वा । ८ । १४० । डौशुनार्घ । ६ । ऋचः । ३७ ।
अनुवाकाः । १० । पदानि । ७४२ ॥ अग्नं स्तनूः ।
ङीताञञ । २ । आपतये त्वा । ४ । १०८ । औ-
रिनिदिः । ५ । तप्तायनी मे । २ । ४८ ॥ घैङघ-
चे । ४ । इन्द्रघोषस्त्वा । ३ । ४८ । वैपाटकृ । ४ ।
युञ्जते मनः । ८ । १५७ । णोभ्रर्दशै । २ । नारि-
रसि । ४ । ७४ । क्षीधिघिदे । ४ । यवोऽ-
सि । ५ । ८१ । जफाठाडी । ८ । विभूर-
सि । ४ । ७८ । छैछ्विणच् । २ । ज्योतिर-

सि । ५ । १०४ । ओवोडाने: । ७ । उरु विष्णो । २ । ५४ । डीटिचटा । ऋच: । ४१ । अनुवाका: । १० । पदानि । ८०६ ॥ अग्रेणीरसि । ५ । ८८ । जैवभ्ठ: । ५ । उपावीरसि । ४ । ८८ । जैमिजाठ । ४ । माहि: । ६ । ११२ । टावायिवौ: । ३ । सन्ने । ३७१ । छभातटै: । ५ । समुद्रं गच्छ । २ । ५७ । ङनागिटा । ४ । हविष्मतीरिमा: । २ । ३५ । गुथीखग: । ३ । हृदे त्वा । ५ । ५० । जौसुटथ् । ६ । रावाऽसि । ८११७ । थेसुणीभै । २ । ऋच: । ३५ । अनुवाका: । ८ । पदानि । ६५८ ॥ वाचस्पतये । ३ । ५८ । डोदजाङी । २ । उपयामगृहीतोऽसि । २ । ३० । खौटछिखा: । १ । आवाहो । २ । ४ । गौटछीछ । अयंवाम् । २ । ३३ । गिचघङा । या वाम् । १ । १३ । किअगङ । तम्प्रत्कथा । ४ । ६१ । भ्रणीनतो: । ५ । अयंवेन: । ३ । ६६ । चूयाथटा: । ३ । ये देवास: । ३ । ५३ । ङिठङञा । २ । इन्द्राय त्वा । २ । २८ । खोगचछी । मूर्द्धानन्दिव: । २ । ४२ । वाठा ङणी: । १ । यस्ते । १ । २५ । घुजघघ: । १ । प्राणाय मे । ३ । ३५ । गुरुन्वघा: । ३ । मधवे त्वा । १ । १५ । कुखकाअ: । ३ । इन्द्राग्नी

ऽआगतम् । १ । १३ । किगखाङ । आघ । १ । १४ ।
ओमासश्चर्षणीधृतः । १ । १० । औचकक । घृणु-
तामें । १ । ८ । ओकअगा । इन्द्रमरुत्त्वः । १ । २२ ।
खाघाखक । मरुत्वन्तम् । १ । १७ । केकगाङः ।
मरुतान्वा । १ । ३० । इइअअकः । १ । सजोषाऽ-
इन्द्र । १ । १८ । कोचिघखा । मरुत्वाँ २ ॥ ऽइ-
न्द्र । १ । २० । कौभाछाई । यओयझा । १ । ८ ।
ओगाकाअ । उडच्युम् । ६ । १०२ । भालठीफेः । ३ ।
ऋचः । ४६ । अनुवाकाः । २५ । पदानि । ९८८ ।
आदित्येभ्यस्त्वा । ४ । ७० । चौतीचिजे । २ । व्या-
समहृद्य । २ ३५ । गुटङाच । २ । सुशर्मासि । १ । ६ ।
ओगगआः । बृहस्पतिसुतस्य । २ । ५१ । ङशि-
आठेः । १ । हरिरसि । ३४५ । घुतिथघिः । ३ ।
समिन्द्र । ६ । १११ । टरैधानी । उरुटं०हि । ४ । ८७ ।
जैपिणिते । २ । एजतु दशमास्यः । ५ । ७१ । छभ-
ठथाः । १ । आतिष्ठ । १ । १८ । कैकाकाखः । १ ।
युक्ष्वाहि । क्रिखगख । इन्द्रमित् । १२ । काखका-
ङा । यस्मान्न । २ । ४३ । धिठपङचीः । १ । अ-
ग्ने पवस्व । १ । २३ । खिगकिङा । २ । अदृश्रम-
स्य । १ । २३ । खिचाअघः । १ । आजिघ्र । २४८ ।
घवगगिः । १ । त्विनऽइन्द्र । १ १७ । केङाखक । त्वा

चस्पतिम् । ६ । १६ । कोडङगा । १ । विश्वक-र्मन्हविषा । १ । १७ । केडाखड । अग्नये त्वा । ४ । ५२ । डाजीजटै । इह रतिः । ३ । ६७ । चेतुक्रणैः । परमेष्ठ्यभिधीतः । १० । १९५ । युमध्ये म्नीमौ । ऋचः । ५७ । अनुवाकाः । २२ । पदानि । १०१६ ॥ देवसवितः । ४ । ७६ । छोभयाम्णिण । २ । इन्द्रस्य वृष्णः । युङ्येदनौः । ३ । देवस्याहम् । ६ । १ । ६२ । ताभ्या भिज्जौ । ४ । आपये स्वाहा । ३ । ६८ । चैघजैछा । ४ । वाजस्येमम् । ८ । १२३ । ठिफीणिशुः । ५ । अग्निरेकाक्षरेण । ४ । ७२ । छाभूरथू । एष ते । ४ । ६६ । चून्माराधौः । १ । सविता त्वा । १ । ४३ । घिङघाड । ऋचः ३६ । अनुवाकाः । ८ । पदानि । ९२८ ॥ अपो देवाः । ४ । ५६ । डूङमीडडः । १ । सोमस्य त्विषिः । ५ । ८६ । जोषपिठो । ४ । अवेष्टा दन्दशूकाः । ६ । १०७ । जेवटुवौ । ८ । सोमस्य त्वा । ३ । ७८ । छैढीजठै । ४ । मित्रावरुणयोस्त्वा । ५ । ६२ । भ्राद्दिनिढै । ४ । सोनाऽसि । ४ । चेवातभ्र । ४ । सवितृत्वा प्रसवितृत्वा । १ । २४ । खिगगाश्र । अग्निस्थध्यामपच्चस्य । ४ । ६५ । चुटाटठू । ऋचः । ३२ । अनुवाकाः । ८ । पदा-

नि । ५७८ ॥ युञ्जानः प्रथमम् । ९ । १३४ ॥ डी-
सिदारो । ६ । प्रतूर्तं वाजिन् ॥ १५ । २१९ ॥ पो-
न्वोडशीर्ग्यूः । १ । अङ्गिरस्वत्खनामि । १० । ४४ ।
टीच्चेर्धले । ४ । अपो देवीः । १२ । २०९ । नो-
न्द्रोशुन्र्यो । ६ । आपो हि । ११ । १५८ । शौन्वि-
नाह् । १२ । अदितिष्ट्वा । ४ । ७४ । चीपक्षजी । ८
आकूतिमग्निम् । १७ । २४० । वोस्त्रीञ्जीम्ये । ४ ।
ऋचः । ७८ । अनुवाकाः । ७ । पदानि । ११७८-
इमानो रुक्क्लः । १६ । ३९७ । वेह्नेवाड्वोर्व्यीः । ५ ।
टीच्चेर्धले । ४ । अपो देवीः । १२ । २० । नो-
न्वोशुन्र्यो । ६ । आवो हि । ११ । १५८ । शौन्वि-
नाङ्घु । १२ । अदितिष्ट्वा । ४ । ७४ । छीपक्ष-
जी । ८ । आकूतिमग्निम् । १७ । २४० । वौस्त्री
ञ्जीम्ये । ४ । ऋचः । ७८ । अनुवाकाः । ७ । पदा-
नि । ११२८ ॥ इमानो रुक्क्लः । १६ । २९७ । येह्ने-
वाड्वोर्व्योः । ५ । दिवस्परि । १० । १८२ । दान्यू-
लुर्ज्यैः । १ । उद्दुत्त्वा । १ । १७२ । याह्मसुफः । ७ ।
अपेत । १५ । २३३ । विर्स्रिंहो स्ती । असुन्न्वन्त-
मयजमानम् । ११ । २१७ । याऽओषधीः । २७ ।
३५१ । स्यच्यौम्लौ । १२ । मा मा । १५ । १२२ ।
प्रवोह्र्व्यैः । ११ ऋचः । १०८ । अनुवाकाः । प-

दानि । १६७३ । मयि गृह्णामि । १३ । २३२ । वान्धमुनुम्नौ: । ५ । ध्रुवाऽसि । ११ । १७२ । याबालैर्तः । ६ । मधु व्वाताः । ६ । १२५ । टुघ्नौघड । ८ । सव्यक्स्त्रवन्ति । ८ । १२४ । ठोषोऽह्ण । ४ । द्रुमम्मा । ६ । १२ । भ्राती जरसु । २ । अपान्त्वा । १ । २० । कौट्टंकक: । ६ । अयम्पुर: । ५ । १०६ । ओर्म्नसुर्फम् । ऋच: । ३ । अनुवाका: । ६ । पदानि । ८०७४ ॥ ध्रुवक्षितिर्ध्रुवयोनि: । ५ । ६२ । भ्राथटिता: । ५ । सजूर्ऋतुभि: । २ । ३८ । गैदभ्रङती । मूर्द्धा व्वय: । २ । ४३ । विरातची । इन्द्राग्नीऽअव्यथमानाम् । ३ । ३५ । गुङङिच्छु: । ३ । आयुर्म्मे । ६ । ७६ । छोमृछजो २ । आशुस्त्रिवृत् । १ । ४१ । घड्यवगि: । अग्नेर्भाग: । ३ । ५६ । ङोधढणो: । १ । एकया स्तुवत । ४ । ७८ । छेङिधखिङा । ऋच: । २६ । पदानि । ४६५ । अनुवाका: । ८ । अग्ने जातान् । ५ । १६३ । रश्मिनासत्याय । ४ । ८० । छौतिथर्ठि । २ । राज्ञसि । ५ । ८७ । जेअडुद: । २ । अयं पुर: । ५ । ७५ । कुलामावे । ६ । अयमग्नि: । २४ । ३२० । षोहव्यीव्रैथच्यों । ४ येनऽऋषय: । ७ । १२० । ठौङमेदिलै: । १ । तपस्तपस्य: । ४ । ६२ । चाटा: । ऋच: । ५४ । अनुवाका: । ७ । पदानि । ८३३ । नमस्ते । २३३ । विश्व-

स्तंस्पृशे । ४ । हिरण्यबाहवे । ५ । ६५ । नुभःफधी । श्वष्णोविशे । ५ । ४३ । घिम्नरक्तं । तच्चभ्यः । ५ । ४२ घाटवञः । १ । ज्येष्ठाय । ५ । ४१ । घयतस्र । सुत्याय । ४ । ३५ । गुखभ्नक । २ । ग्रम्भवाय । १ । ७ एगङख । पार्याय । ५ । ४८ । घोटदकु । द्रापेऽस्र न्वसः । ७१ । १८८ । दालीज्ञामैः । ७ । ऋचः । ६३ अनुवाकाः । ८ । पदानि । ७०३ । अश्मन्नूर्जम् ८ घोटदकु । ८ । १५४ । खीन्यक्तु । ६ । न मस्ते । ५ । ६३ । चिपिडक्षाः । ३ । अग्निरग्नेन । ७ । १५४ । ठिमेर्घूपैः । २ । चत्तुः पिता । ८ । ४६ । ढुमीयीक्यः । १ । आशुः शिशानः । १३ । २८ लस्त्न्वौचिर्मीः । १३ । उदेनस् । १४ । २०८ । नैलिवज्युर्लैः । १ । क्रमद्धसन्निना । १३ । २०८ मोष्मुविभ्नोः । १ । शुक्रउज्योतिश्च । ७ । ९२ । क्रन्दलक्लोः । १ । इमर्ठ० स्तन । १३ । २०८ । नैःहैंस्न्यौं । ४ । ऋचः । ८२ । अनुवाकाः । ८ । १४६५ व्वाजश्च । ४५६ । ङलेक्षाजा । सत्यं श्रद्धा । ४ । ४८ वैरसनो । उर्क् सूनृता । ४ । ४८ । वैमजतु । श्रम्ना । ३२३ । गिपखच । अग्निरिन्द्रः । २० । कंटग्रक । अष्टगृह्णिसः । ५८ । ङेम्पथिकि । एका तिस्रः । ४ । ४१ । घनामोङ्ग । व्वाजाय स्वाहा । ३०

३० । खौचङ्नूः । १ । विश्वोऽयद्द्य । ६ । १०१ ।
अनिटारिय । ६ । ऋतापाट् । ११ । १२१ । ठ्यीद-
ह् । २ । अग्निर्ज्युनरिज्म । ७ । १०७ । अग्निता-
गाः । ५ । यदाकृलात् । ८ । १ । ११४ । टिलोया-
श्रीः । १ । वार्त्रहत्याय । ८ । १२३ । ठिज्यिहमिः ।
ऋचः । ६२ । अनुवाकाः । १३ । पदानि । ६०० ॥
व हो न्वा । ६ । १५१ । वाहिताहृद्धे । ६ । देवा
ज्ञन् । २ । २३५ । दुष्ठवेम्वसौ । सुरावन्तवर्हि-
ादम् । १७ । २२७ । केह्मीशीर्वी । ६ । उदीरता-
म् । १३ । २२२ । भारतवौ द्रूखे । १२ । आच्छा ना-
मु । १० । १७८ । धेष्ठोधिफौः ३ । सोमो राजा ।
ाद् गोर्फ । सीसेन तन्त्रम् । १६ । २८२ । लात्वी-
र्णोऽर्न । २ । ऋचः । ६३ । अनुवाकाः । ७ । पदा-
नि । ३०६ ॥ चत्रस्य योनिः । १२ । १६० । दौर्म्नी
ग्नौ ६ । यद्देवाः । ६ । १०६ । अं।मोडोमीः । ७
ग्याहृशामि । ८५ । क्षानाक्षायिः । १ । यो भूता-
नाम् । ३ । ४२ । घादिठउ । १ । समिद्धोऽग्न-
द्रः । ११ । १७२ । दात्वौडुक्केः । ३ । आया-
तु । ८ । १३६ । डे धमृषीर्फौ । ११२ । समिद्धोऽश्र-
ग्नः । १२ । १५४ । धीलीसृप्रि । २ । अश्विन-
ना । १२ । १४८ । ढैडधीफाहिः । १ । अश्विना ते-

जंसा । ११ । १०४ । ओतग्रधाणे । ऋचः ८१ अनुवाकाः । ६ । पदानि । १६४ ॥ इमस्मे । ८ । ११८ टैर्वाढावा । ४ । समिद्धोऽअग्निः । ११ ६८ । अश्वो स्तोमीर्ऋ । वसन्तेनऽऋतुना । ६ । ४४ । घीतछघ होता यक्षत् । १२ । १४८ । भैमूीघुश्नं । २ । अश्वि नौ छागस्य । ६ । १४६ । ढ्स्फमर्हो । ६ । देवस्व र्हिः । १४ । २८६ । त्वोभ्यामणीर्काः । ६ । ऋचः । ५७ अनुवाकाः । ६ । पदानि । ८४२ ॥ तेजोऽ सि । ५ ८० । छौफुटश्र । २ । अपाम्मोदाय । १ । ६ ओश्रश्रक । १ । हिङ्काराय । २ । ५४ । ङीश्रवडी हिरण्यपाणिमूतये । ६ । ८४ । जीघादप् । ध्वि म्मीत्रा । ८ । ३७ । नेथवङः । १ । काय क स्मै । १ । २४ । खीकक्कख । आब्रह्मन् । घापिजन्वः १ । चक्षुषे श्रोत्राय । ८ । १४ । ईश्रश्र श्रः । १ । प्राच्यै दिशे । १ । ८ । श्रोश्रश्रश्रः । अद्भ्यो ऽवाऽर्थः । १ । १२ । काक्कखश्रा । वाताय धूमा य । १ । १८ ॥ कैखङखि । इन्द्राय पृथिव्यै । १ । ८ श्रोखकश्रा । नक्षत्रेभ्यो नक्षत्रियेभ्यः । १ । २४ खीनचकाः । १ । परिप्लवेभ्यः । १ । ३ । इगकश्र । अ सवे व्यसवें । १ । १५ । कुश्रचक । इषायोर्ज्जाय । १ । २ श्राश्रतश्र । स्वः स्वाहा । १ । ४ । ईककाश्र । प्राणे

ऽपान: । १ । ५ । डङचका । एकस्मै द्वाभ्याम् । ६ ञकगका । १ । ऋच: । २९ । अनुवाका: । १६ । पदानि । ४४१ ॥ प्रजापतये त्वा । १ । २३ । खिगागख । य: प्राणत: । १ । २३ । रिव्वडयका: । १ । युञ्जन्ति ब्रध्नम् । ८ । १०८ । ऐभीछते । २ । वायुष्ट्वा । ५ । ८३ । भिडमुडाभै । ६ । अम्बेऽअम्बिके । ३ । ४४ । घीतटाढ । २ । उत्सक्थ्याऽअव । १२ । ४४ । ठीरटाभू: । १ । गायत्री त्रिष्टुप् । ५ । ५६ । ङष्टके: । ३ । कस्त्वा । ६ । ८४ । जुयछिज । १२ । किंस्वित् । ६ । १०७ । अयिजुते । ४ । काऽईम् । ८ । १३८ । डेडयणीवि । २ । सुभू: स्वयम्भू: । २ । २३ । खिभाघचा: । ऋच: । ५७ । अनुवाका: । ११ । पदानि । ८४४ । अश्वस्तूपर: । १० । १६८ । तोहमस्लङ् । धूम्रानवसन्ताय । १० । ११६ । ढहज्नटि: । १ । समुद्राय शिशुमारान् । १० । १३१ । हेर्हयाङ । मयु: प्राजापत्य: । १० । १८२ । धह्लिलयू । ऋच: । ४० । अनुवाका: । ४ । पदानि । ५१४ । शादन्दद्भि: । १ । ४० । गौठिभाणि ॥ व्याघ्रप्राणेन । १ । ४१ । घचाडादि । मणकान्केशै: । ८ । वंधीचता । अग्ने: पक्षति: । १ । ३० । गायगच्छ । मरुताᳬ स्कन्धा: । १ । २४ । खीगगाङ । पूषणम्वनिष्ठुना । १ । २२ । खाङचट: । इन्द्रस्य क्रो-

डः । ८ । ३५ । गुजेङ्भा । विष्टतिन्नाभ्या । १ । २६ । खजगडा । यस्ने । खैक्ष्णकाशे । आनः । १० । १९१ । घश्लोभाद्रिः । ७ । सानः । ८ । १४८ । ठैद्रियाभीः । ३ यश्श्वस्य । ८ । ८३८ । डैमफाह्वः । ३ । यते । ६ । १८४ । त्रिग्रदुदे । २ । इमा नु । १ । ३० । खौक्ष्णगिडी । ऋचः । ४४ । अनुवाकाः । १५ । पदानि । ८१२ ॥ अगिलश्च । १४ । २१८ । पैह्लोड्रिभूर्व । १० । उद्वाते । ११ । १३६ । उडुप्राथितो । ४ । ऋचः । २५ । अनुवाकाः । २ । पदानि । ३५४ । समास्त्वा । ८ । १७३ । घिध्रोरवो । ४ । जद्द्वोऽअस्य । १२ । १३७ । हेठअ-हृये । ४ । पीवोऽअन्ना । १२ । १७७ । थन्हर्वगो । ४ । अभित्वा । ११ । १६५ । तुम्यपाशोः । ३ । ऋचः । ४४ । अनुवाकाः । ४ । पदानि । ६५० । होता यक्षत् । ११ । १२४ । टिष्ठुपृच्न । २ । देवर्म्बर्हिः । टोयेभोर्त्यु । २ । समिधानम्महत् । १३ । ११८२ । टैभान्योषु । देवर्म्बर्हिः । २ । ४१ । घक्षुरक्ति । ऋचः । २६ । अनुवाकाः । ४ । पदानि । ४२७ ॥ समिद्धोऽअञ्जन् । ११ । १८६ । धूंच्होन्हलुः । ८ । यः क्रान्दः । १३ । २३२ । वाराम्नीसुन्देः । ५ । समिद्धोऽअद्य । १२ । २०२ । नकोवीक्षु । ८ । केतुङ् कृरावन् । २४ । ४४१ । भाष्लैधर्रहशोर्ष्णि । १२ । ऋचः । ६० । अनुवाकाः । ४ ।

पदानि । १०७१ ॥ विभ्राजानि देव । ४ । ६१ । यच-
डथी । तपसे कौलालम् । १६ । ३५० । ज्यं कुसङ्कृ-
व्याहृसत्यु । ८ । ऋचः । २० । अनुवाकाः । २ । पदा-
नि । ४११ ॥ सहस्रशीर्षा पुरुषः । १६ । २३७ । फो
ल्पिर्हर्षि । १ । अद्भ्यः सम्भृतः । ६ । १०५ । अलु-
टिपै । ऋचः । २२ । अनुवाकाः । २ । पदानि । ३३० ।
तद्देव । ७ । १०३ । ब्रिक्रयश्रैर्भ्रा । वेनस्तत् । १ । १५ ।
वोशूक्रीच्चु । ३ । ऋचः । १६ । अनुवाकाः । २ ।
पदानि । २६२ । अश्मा जरासः । १४ । २०३ । नाङ्ह-
ङ्गसीर्भु । ५ । आपश्चित् । १२ । १४८ । दोद्दोयु-
र्हं । ४ । विभ्राड्बृहत् । १२ । २०० । धांम्नैऽौवधां-
। १० । प्रवाहजे । १० । १५३ । शिस्ततोशु । २ । प्र-
वायुम् । १३ । १८० । यौष्योलुडेमीः । ७ । प्रवीर-
या । १२ । १८६ । दोश्व्यैरुहुः । ३ । आनः । १३ ।
१८२ । धाम्याषूर्सं । ६ । ऋचः । ८७ । अनुवाकाः । ७
पदानि । १३०५ ॥ यज्ज ग्रतः । १० । १४७ । डेशु-
भिर्युं १२ । पञ्चनद्यः । १० । १६१ । तेश्चिपाशे । ६
सोमो धेनुम् । १० । १६३ । तिष्ठेनशे । ४ । आरा-
चि । ८ । १६२ । ताम्स्विलो । ५ । पूषन्तव । १० ।
१४८ । ढभनूमेड्वेः । ३ । न तत् । ८ । १४६ । ढूस्वो-
षह्रो । ५ । ऋचः । ५७ । अनुवाकाः । ६ । पदानि । ८३४ । अ

प्रेतः । ६ । ३९ । डोग्रेठियः । १ । अपाचम् । ८ । १३४ । डीनिज्यू । ४ । ऋचः । १८ । अनुवाकाः । २ । पदानि । २७३ । ऋचँश्वाचम् । ८ । ६८ । क्षैज्वाक्षाद्ध । १० द्यौः शान्तिः । १५ । ७३ । छिपादाणे । ४ ऋचः । १३ । अनुवाकाः । २ । पदानि । १७२ । नारिरसि । ३ । ३६ । गृञ्जगिरवाः । १ । युमाय मखाय । १० । १६२ । ताप्वीनीलृ । ऋचः । १२ । अनुवाकाः । २ । पदानि । १९८ । सरस्वत्यसौ । ६ । ८५ । छुणडिछी । ३ । यमायाङ्गिरस्वते । १० । १२३ । ठिमीतिर्यीः । ३ । चत्तस्वा । ७ । १०७ । जशापीणो । १ । ऋचः । २३ । अनुवाकाः । २ । पदानि । ३०४ । स्वाहा प्राणेभ्यः ६ । ४८ । जै धिगदू । उग्रश्च । ७ । ९१ । झमीलाघु । २ ऋचः । १३ । अनुवाकाः । २ । पदानि । १७१ ईशा वास्यम् । ८ । १३२ । डाशोडिर्धीः । १ । अन्धन्तमः । ६ । ७९ । छोणडिषे । ऋचः । १४ । अनुवाकाः । २ । पदानि । २११ ॥ इतिश्री पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्रविरचिता वेदपरिभाषा शिक्षा समाप्ता ॥ अथ वेदपरिभाषा कारिका शिक्षा सटीका प्रारभ्यते ॥ श्रीरामं सद्गुरुं याज्ञवल्क्यं कात्यायनं तथा ॥ नत्वा पदानां वक्ष्यामि लक्षणं चतुरक्षरैः ॥ १ ॥ अनुवाकेऽनुवाके चाम्नाये माध्यन्दिनीयके ॥ परिभा-

षोच्यते हल्युक् केवलो वा स्वरोऽक्षरम् ॥ २ ॥ अ
नयोरर्थः । श्रीराममुपास्य देवतां विद्याप्रदं स्वगुरुं शा
खाप्रणेतारं याज्ञवल्क्यं, सूत्रकारं कात्यायनं च न-
त्वा नमस्कृत्य माध्यन्दिनीयके माध्यन्दिनशाखायां
अनुवाकेऽनुवाके प्रत्यनुवाकं तस्मिन्ननुवाके पदानां
चतुरक्षरैः अक्षरचतुष्टयेन लक्षणनिर्णयं वक्ष्यामि ।
कथयिष्यामि । तत्र परिभाषोच्यते । हलिति व्यञ्ज-
नसञ्ज्ञा । व्यञ्जनयुतं शुद्धत्यादि तद्व अक्षरसञ्ज्ञं ज्ञे
यम् ॥ २ ॥ पदसङ्ख्याऽऽदिमेन स्यादि द्वितीयेन वि-
सर्गनौ ॥ सावग्रहं सेतिकारं तृतीयेन तुरीयतः ॥ ३ ॥
मान्तं कादिहलन्तं च सितुसेन्तं विसर्गतः ॥ एकरूपं
विषमं तदभावे समन्न वा ॥ ४ ॥ अनयोरर्थः । आदि-
मेनाक्षरेणानुवाकपदसङ्ख्या ज्ञेया, द्वितीयेनाक्षरेण
विसर्गनौ विसर्गान्तनान्तपदसङ्ख्या, तृतीयेनाक्षरेण
सावग्रहकेवलेतिकारसहितपदसङ्ख्या । चतुर्थेनाक्ष-
रेण मान्तकटतपङणान्तपदसङ्ख्या ज्ञेया । सितुसे-
तमिति सर्वान्ते विसर्गश्चेत् । तेन सिशब्दान्तं तु श-
ब्दान्तं च एकरूपं एकसङ्ख्याबोधितं च विषयं बोध्य-
म् । यथा प्रथमाध्यायस्य पञ्चमेऽनुवाके शम्मासीत्येत-
स्मिन् सिशब्दान्तानि अष्टौ तुशब्दान्तानि पञ्च मिलि-
त्वा त्रयोदश १३ विषमसङ्ख्या वा तद्बोधकः । जि-

वतिटूः । इति विसर्गो लिखितः । कति विषमाणी
ति निर्णयार्थम् । अङ्कोऽपि यथा तत्रैव १३ तदभावे
यत्र विसर्गो न लिखितस्तत्र समानि अथवा न सन्ति
तयोर्निर्णयार्थं यत्र समानि तत्राङ्क एव लिख्यते । यथा
प्रथमाध्याये द्वितीयानुवाके वसोः पवित्रमित्येतस्मि
न् याढमचा इत्यक्षरान्ते तत्र स्पन्दकं त्वन्तकमेकं
इति मिलित्वा द्वयं सः अङ्क एव लिखितः । अधुना
सङ्ख्यानिर्णयार्थं स्वराणां व्यञ्जनानां च सङ्ख्यानि
यमक्रमं चाह ॥ ककारादिहकारान्तास्त्रयस्त्रिंशद्व
लः स्मृताः ॥ सङ्ख्यापूर्तिस्तु नैकेन संयोगं तत्र कार
येत् ॥ ५ ॥ अस्यार्थः । ककारमारभ्य हकारपर्यन्त
त्रयस्त्रिंशद्व्यञ्जनानि यस्मिन्नक्षरे यद्व्यञ्जनं लि
खितं तस्य या सङ्ख्या सैव तदक्षरबोध्यस्य ज्ञेयाः
गकारे त्रयः । चकारे षडित्यादि । यथा प्रथमा
नुवाके "गु" इत्यत्र गकारेण त्रयः । "ठि" इत्य
ठकारेण द्वादश । यत्र तु एकेन व्यञ्जनेन सङ्ख्या
पूरणन्नास्ति तत्र सङ्ख्यापूर्तिपर्यन्तं व्यञ्जनानां सं
योगं कृत्वा लेखनीयम् । यथा द्वितीयाध्यायस्यान्ति
मेऽनुवाके । अग्नये कव्यवाहनायेत्यत्र जोड्वठुः
इत्यत्र द्वितीयाक्षरे ङकारेण पञ्च वकारेण एको
नत्रिंशन्मिलित्वा चतुस्त्रिंशत्सङ्ख्या ज्ञातव्येति ।

५ ॥ ऋ ऌवर्ज्या अकाराद्या औकारान्ताः स्वरा दश ।
आद्ये द्वितीयादिषु तु नवैवाकारवर्जिताः ॥ ६ ॥
अस्यार्थः । स्वरास्तु ऋऌवर्ज्या इत्यकारादयः औका-
रान्ताः अआ इई उऊ एऐ ओऔ इति प्रथमाक्षरे स्व-
रा ज्ञेयाः । यथा प्रथमाध्यायस्य प्रथमानुवाके "शु" इ-
त्यत्र उकारेण पञ्च । द्वितीयाद्यक्षरचये तु अकारं
त्यक्त्वा आकारमारभ्य एकादिनवपर्यन्ता गणनीयाः ।
अत्र तु अकारस्तत्र शून्यम् । यथा प्रथमानुवाके "ठि"
त्यत्र इकारेण द्वौ । तथा तत्रैव "घ" इत्यत्र अका-
रेण शून्यमभावइत्यर्थः ॥ ६ ॥ नवाधिके तूपरिस्थरे-
खा दश वा नखाः ॥ एकोनविंशत्यधिके ऽनुस्वारात्तिथ-
स्मृताः ॥ ७ ॥ अस्यार्थः । यत्र तु स्वरेषु नवापेक्ष-
ऽधिकसङ्ख्या अपेक्षिता तत्र तदक्षरस्योपरि दे-
गोधिका कुण्डली लेखनीया तया दशसङ्ख्या ज्ञा-
तव्या । तत्र यत्रैका कुण्डली तत्र दशैव । यत्र विंश-
तिः । यथा तृतीयाध्यायस्य चतुर्थेऽनुवाके उपप्रय-
इत्यत्र चतुर्थाक्षरे "र्हि" इत्यत्र रेफेण दश इका-
रेण द्वौ मिलित्वा द्वादश । कुण्डली द्वयं तु सर्वग्रन्थ-
ग्रे स्थलद्वये लिखितं तत्र विंशतिः । यथा चतुर्विं-
शतितमेऽध्याये तृतीयानुवाके समुद्रायेत्यस्मिन् "डे"
पङ्क्ती इत्यत्र द्वितीयाक्षरे तथा एकत्रिंशेऽध्याये स-

ह्रस्वगोर्पेति प्रथमानुवाके "फौविर्हर्पिः" इत्यत्र चतु
र्थेऽक्षरे इति । एकोनविंशतीति । स्वररेफौ मि
लित्वा एकोनविंशतिस्तदपेक्षयाऽधिकसङ्ख्या । यत्रा
पेक्षिता तत्रोपरि अनुस्वारो लेखनीयस्तेन तिथयः प
ञ्चदश ज्ञेयाः । यथा द्वादशेऽध्याये षष्ठे या ओषधी
रित्यनुवाके इत्यत्र चतुर्थेऽक्षरेऽनुस्वारेण पञ्चदश
ओकारेणाष्टौ मिलित्वा त्रयोविंशतिरित्यर्थः ॥ ७ ॥
अधुना केन प्रकारेण सङ्ख्या ज्ञानं तं प्रकारमाह
दशघ्ने हल्युते नाचा पदसङ्ख्याऽऽदिमेऽक्षरे ॥ द्वि
तीयादित्रिष्ठहलिभिर्विसर्गोऽवग्रहश्च मः ॥ ८ ॥ अ
ञ्जिभन्नांतं सेतिकारं क्रमात्कादिहलन्तकम् ॥ अस्या
र्थः । अच् इति स्वरसञ्ज्ञा । आद्येऽक्षरे दशभिर्गु ण
तो यो हल् व्यञ्जनन्तेन युक्तो योऽच् स्वरस्तेन या स
म्पन्ना सा पदानां सङ्ख्या । यथा प्रथमाध्यायस्य नव
मेऽनुवाके मादेऽह्वारुतं इत्यत्र "आभुधुधी." भ=
प्रथमाक्षरं आ तत्र हल् अकारो दश स दशघ्नः शत
अच् आकारः द्वे मिलित्वा द्व्यधिकं शतम् । १०२
सा पदसङ्ख्या । द्वितीयादिति । द्वितीयाक्षरस्यव्यञ्ज
नेन विसर्गसङ्ख्या । तृतीयाक्षरस्यव्यञ्जनेनावग्रह
सङ्ख्या । चतुर्थाक्षरस्य व्यञ्जनेन मान्तपदसङ्ख्या
तृतीयाक्षरस्यव्यञ्जनेनावग्रहसङ्ख्या । चतुर्थाक्षरस्य

व्यञ्जनेन मान्तपदसङ्ख्या । द्वितीयाक्षरस्थस्वरेण नान्तपदसङ्ख्या । तृतीयाक्षरस्थस्वरेण निरवग्रहसेतिकारपदसङ्ख्या । चतुर्थाक्षरस्थस्वरेण कटतपङणान्तपदसङ्ख्या । यथा तत्रैव द्वितीयाक्षरं "भु" । इति तत्र व्यञ्जनं भकारः । चतुर्विंशतिस्तावन्तो विसर्गाः स्वरः उकारः अकारादिगणनया चत्वारस्तावन्तो नकाराः तृतीयाक्षरं "ढु" इति तत्र व्यञ्जनं ढकारश्चतुर्दश तावन्तोऽवग्रहाः । स्वरउकारश्चत्वारस्तावन्तो निरवग्रहा इतिकाराः । चतुर्थाक्षरं धी इति तत्र व्यञ्जनं धकारइत्येकोनविंशतिः । तावन्तो मकाराः । स्वरईकारस्त्वयस्तावन्ति ककारादिव्यञ्जनानि । इति बोध्यम् ॥ ८ ॥ विसर्गः पदमध्यस्थः पद्यान्तस्थ पदान्तगः । ९ । पद्यान्तं च पदान्तं च व्यञ्जनं सितुसेन्तकम् ॥ कटौ तपौ ङणनमा हलः पद्यपदान्तगाः ॥ १० ॥ सार्धैकपद्यस्यायमर्थः । अत्र सङ्ख्यागणने विसर्गः पदमध्यस्थः । धूः सहाविति । पद्यमवग्रहस्तदन्त्यः इतिकरणोत्तरे तत्रैव धूः । सहौ । पदान्तगो व्याय्व इत्यादि स्त्रिविधोऽपि ग्राह्यः । ९ । व्यञ्जनं तु पद्यान्तं इषएवस्त्वऽइति इषण् । त्वस्य इति । अवग्रहान्तो णकारः पदान्तमवर्धयत् इति तकारः । एते सङ्ख्यागणने ग्राह्ये । तथैव सितुसेन्तमपि । पदान्ते यातुधा-

नाऽइति यातु । धाना: । पदान्ते पुनातु इत्यादिकम् । त्रिप्रमसमगणने द्वे अपि ग्राह्ये । कटाविति । कटतपा ङणनमाः । एते अष्टावेव हलः पदान्ते स्व सन्ति । "प्रथमोत्तमाः पदान्तीया ऋच् ओ" इति प्रातिशाख्यसूत्रात् । इयञ्चतुर्वर्णयुता निर्णीय परिभाषिका ॥ सौकर्यदात्री पाठस्य पद्वेदस्य कारिका ॥ १ ॥ इति श्रीमत्पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्रविरचिता वेदपरिभाषा कारिका शिक्षा व्याख्यानयुता समाप्ता ॥

---

# अथ यजुर्विधान शिक्षा ॥

अथातो मन्त्राणामनुष्ठानकल्पनं वसिष्ठादिभिर्ब्रह्मर्षिभिरनुष्ठितमनुव्याख्यास्यामो नान्यद्रव्याख्यानस्य कदाचिद्धनार्जनक्रिया विद्यते होमानां यज्ञानां वैषाऽवश्यं क्रिया किन्तु मन्त्राहुतिवीर्यज्ञानं विद्याधनानां यजुर्वेदेषु दृश्यते क एते मन्त्रा य एते मन्त्रा ऋग्यजुःसामाथर्वाङ्गिरस उभयात्मका मन्त्रा देवताभीष्टा वा परा द्रव्यसंस्कारकाश्चेति य एते द्रव्यसंस्कारपरास्ते तत्रैवोपयोगिनो ये पुनर्देवताभिज्ञानास्तु फलं तेषाम् सर्वार्थत्वमभिसन्धायाऽऽराधितानां च फलाऽऽदानऽथाज्ञानमाधितानां फलदर्शनान्मन्त्रलिङ्गदर्शनाच्च विनियोगान्तरं वक्ष्यामस्तत्र कर्मकरणे तुलापुरुषचान्द्रायणकृच्छ्रातिकृच्छ्रादिभिः पूतशरीरेण कर्मापेक्षया द्वादशरात्रं षड्रात्रं त्रिरात्रमिति च कर्मणां कर्माङ्गानि कार्याणि सर्वमन्त्राणां पूर्वमेव लक्षणमयुतं सहस्रमिति च सिद्ध्यपेक्षया कार्याणि कर्मावसाने च फलावाप्तिर्ब्रह्मचारिणा भवितव्यं सरहस्ये कल्पाश्च सिद्धयो भावज्ञातव्याश्चेति ॥ १ ॥ अथ सर्वोङ्कारपूर्वाभिर्महाव्याहृतिभिराज्याहुतिसहस्रं

जुहुयात्सर्वदेवताऽऽराधने समर्थो भवति तेजस्वी भवत्यथ यथेदं कर्मकारणं समेताभिरौदुम्बरसमिधं जुहुयात्पश्वन्नकामो दधि पयो वा शान्तिकामोऽपामार्गस्तण्डुलानर्कसमिधो हिरण्यकामोऽन्नाद्यकामं जातीपुष्पाणां युग्मशो ग्रथितानामखण्डितानां शतानामयुतं जुहुयात्कामो मुष्टिभिस्तिलतण्डुलाञ्जुहुयाद्ग्रामकामोऽपामार्गकामः कर्कोटकान्वशीकर्तुकामोऽभिचारार्थं विषरुधिराक्ता गिरिमालुव्याधिघातकसमिधो जुहुयाद्विषरुधिराक्ता विभीतकसमिधो जुहुयाद्राजा वश्यो भवति क्रोधान्वितो जनमरणे जये वा सर्वान्व्रीहीञ्जुहुयादुपशाम्यति दूर्वाव्रीहिभिर्यत्प्रतिष्ठलित्रयं जुहुयात्स राजा वशी स्यात्सर्वव्रीहिभिः प्ररूढैर्जुहुयाद्बहुशो भवन्ति दूर्वामायुष्कामः पुष्पाणि वसुकामो वा सक्तुशाग्रं ब्रह्मवर्चसकामो भ मनुरकाष्टककाण्डान्प्रत्यङ्गिरे काकोलूकपक्षहोमो विद्वेषणे चन्द्रग्रहे कपिलाघृतं सहस्रसङ्ख्याताभिर्जुहुतं स्रुवेणैव वचामालोड्याऽमुनाऽभिमन्त्रितं कृत्वा पिबेत्परममेधावी भवति पुत्रकामो मासमादित्याऽभिमुखः प्रतिदिनं पुरुषसूक्तमयुतं जपेत्पुत्रं लभते यद्यदिच्छेत्तदर्थमपि याज्ञिकद्रव्यं जुहुयात्तत्तदवश्यं सम्पद्यते ॥ २ ॥ इत्यनादिष्टोऽयतहोमः ॥ ओङ्का-

त्पूर्विकया गायत्र्या च पृथग्युक्तानि सर्वाणि कर्माणि कर्तव्यानि सर्वकामप्राप्त्यर्थोऽयं मन्त्रः सर्वफलसिद्धिदः सर्वकामदइत्यनादेशेऽयुतहोम ओङ्कारेण गायत्र्या पृथगुक्तानि कर्माणि भवन्ति सर्वमन्त्रगणस्याऽप्येषविधिर्दृष्टव्यः वधोऽसीत्यनेनैकादशाङ्गुलां कीलीं खादिरीं वा सूचीं सहस्राभिमन्त्रितां कृत्वा शत्रुगृहे निखनेदुद्धसति भुवनं, भुवपतये स्वाहेति मन्त्रत्रयस्य प्रतिमन्त्रं महाव्याहृतिवत्कर्म । सूर्यस्त्वेति परा रक्षा प्रत्यङ्गिरं च कर्म । देवं वर्षयितुकाम उदुम्बरबिल्ववेतसवारणानां समिधो दधिमधुघृताक्ताञ्जुहुयाद्धन्तु वयःऽइत्यावहशब्दस्य प्लुतः कार्यश्चतुष्पाऽइति स्त्रुवनेम मन्त्रेणावहतचतुरुदके प्रविश्याहोरात्रं जपेदनपहतचतुर्भवति॥ ३ ॥ उपप्रयन्तऽइत्यनुवाकेन महानसाग्निमुपसमाधाय प्रत्यृचमन्नमन्वहं जुहुयादन्नवान्भवति । तनूपाऽअग्नेःसीति रुजा ग्रस्तो दूर्वामयुतं जुहुयाद्रुजा मुच्यते । सन्त्वमग्नऽइति नवभिर्ऋग्भिर्गोष्ठे गा उपतिष्ठत तावत्सङ्ख्या भवन्ति गाव,इहैवेति यान्धेनुमिच्छति तस्या एव पतितं गोमयं गृहीत्वा दधिमधुघृताक्तं जुहुयात्तां धेनुंल्लभेदमोघं कर्मत्याचक्षते । महिवीणामिति त्र्यृचं पथिगच्छञ्जपेत्क्षेमेण गच्छति । सुप्रजाइति महाव्याहृतिवत्कर्माभिचारवर्ज,पुष्टिक-

मंस्तु चेष ते रुद्रद्रेति पूर्वार्द्धेन गवेधुकतण्डुलाञ्जुहु
यादन्नकामो वीरक्रमेण शतपुष्पीं क्रीत्वा जुहुयात्त
न्मत्स्यर्ढ० शतगुणमुत्पद्यते द्वितीयार्द्धेन मूषकमलभे
त्पाते चेत्रमध्ये वर्त्तिं निवेदयेत्पिष्टपूरिकासुराणाए
सार्द्धिभिरुपशाम्यति ॥ ४ ॥ द्विपदचतुष्पदानामुपसर्गे
भेषजमसीति दधिमधुघृतं जुहुयाच्छान्तिर्भवति
त्र्यम्बकमित्यृचार्द्धेन शान्तिकामः पुष्टिकामो वा धा
न्यत्रीहिसमिधो जुहुयात् त्र्यम्बकमिति कन्यानाए सौ
भाग्यकामानां पतिकामानां भगकामानां वा सर्वा
भिस्त्रीभिराज्यहोमः पुरुषस्य कन्याकामस्यानेनैव हो
मः कन्यानामग्रहणं कृत्तिवासा इति भयेषु जपेद
भयं भवति जपेन सर्वोत्तरवादी भवति लोकस्य वचन
विधेयो भवति त्र्यम्बकमित्यृगुभयेन धत्तूरकपुष्पाणां घृ
तालुतानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय श
तसहस्रं जुहुयात्साक्षाद्भगवन्तं त्र्यम्बकं पशुपतिं दृष्ट्वैव
तेनेत्युपतिष्ठते ह्युपस्थानान्तेऽभीष्टान्कामाँल्लभत ऽएते-
नैव गुग्गुलधूपो दीपश्च नवनीतेनाथ भगवन्तं त्र्यम्बकं
पश्यति चेत्सुवर्णरजतमिश्राणां भाजनानाए सहस्रँल्ल-
भते ॥ ५ ॥ आकूत्याऽइत्यष्टौ स्रुवाहुतीर्जुहुयाद्राज-
कुलेभ्यो भयन्न भवत्यन्वहं जुहुयात्काएस्यभाजना-
नाए शतँल्लभते तिलाहुतीनामयुतं जुहुयाद्गोत्रे

ष्यापदो न भवन्त्यकालेन कश्चिन्म्रियते । चिदसीति सहस्रं जपेत्सर्वोत्तरवादी भवति लोकश्च वचनविधेयो भवत्यग्नेस्तनूरिति व्रीहितण्डुलान्पयोऽयुतान्सहस्रं जुहुयात्सर्वातिथिर्भवति । युञ्जते मनऽइति वैष्णवानुवाकं जप्त्वा सायंप्रातः प्रयुञ्जानो दीर्घायुर्भवति भयमन्यत्राऽपि न भवति । दिवो वा विष्णऽइति महाव्याहृतिवत्कर्म । विष्णो रराटमित्ययुतं जप्त्वाऽष्टसहस्रं जुहुयात्पातालेऽपि भयन्न भवत्ययन्नोऽश्वेनरिति रात्रौ शरीरमायुधञ्चात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति ॥ ६ ॥ इदमापः प्रवहतेत्यप्सु निमज्ज्य जपेदहोरात्रोषितो यावज्जीवकृतात्पापात्प्रमुच्यते । देवाꣳशोऽइति व्याधिघातकराजिकाभिरभिचारो युद्धा हि केशिनेत्युपश्रुतिरहोरात्रोषितो भूत्वोपश्रुतिं कुर्याज्जुहुयादग्नऽआयूꣳषि पवस्वेति ब्रह्मवर्चसकामस्याज्यहोमऽउदुत्यमिति व्रीहितण्डुलान्पयसा संयुक्तान्हुतसहस्रं जुहुयात्सर्वातिथिर्भवति । चित्रन्देवानामिति महाव्याहृतिवत्कर्म । विऽइन्द्रेति यस्मादधिको भवितुमिच्छन्ब्रह्मवर्चसेन विद्यया धनेन यशसा वा तस्य नामग्राहं जपेदधिको भवत्यनेनैवाज्याहुतीर्जुहुयाद्ग्रामसिद्धं लभते । विश्वकर्मन्हविषेति यामेव कन्यामिच्छति तस्या

नामग्राहमायसीꣳ सूचीं द्वादशाङ्गुलाꣳ सहस्राभि-
मन्त्रितां कृत्वा तस्याऽएव गृहद्वारे निखनेन्न स्त्रियै
न चान्यस्मै प्रदीयते ॥ ७ ॥ प्राणायस्ऽइत्यवकाशा-
न्नित्यं जपेत्तेजस्वी भवति निरस्तश्चाजिघ्रेति सहस्र-
मुहुत्वाऽग्नौ समिधोदुम्बरगोमयहोमः पशव्यं कर्म
गोमयेन गोः प्रकृतिं कृत्वा देवसवितरित्यन्नभागभ-
वति । व्राजक्षेममसि । सप्तभिरृग्भिराज्याहुति
सहस्रं जुहुयाद्यज्ञादन्यत्र यज्जुहोति तच्च सूक्ष्मं सह-
स्रं गुणमुत्पद्यते तदक्षय्यं भवत्यग्नेऽभ्यक्तेति सहस्राणि
न्यान्यदुम्बरयवतिलधान्यापामार्गतण्डुलाञ्जुहुयाद्धन-
कामो वीरक्रयेण शतपुष्पीं क्रीत्वा जुहुयात्तन्मू-
ल्यसहस्रगुणमुत्पद्यते । उदुम्बरसमिधमयुतं जुहु-
यात्सुवर्णमुत्पद्यते । गोरोचनामष्टसहस्राभिमन्त्रितां
कृत्वा ललाटे तिलकं कुर्यात्सर्वजनप्रियो भवति ।
सोमꣳ राजानमिति मासं पौर्णमास्याꣳ संवत्सर-
ꣳ सोममुपतिष्ठेत ब्राह्मणायाग्रं दत्वा भुञ्जीत त्रि-
प्रꣳ सोमयाजी भवति । प्रनो यच्छत्वित्यन्नकामो
होमद्रव्याणि जुहुयादयुतमर्य्यमणमित्यादित्याभि-
मुखः प्रतिदिनं काममभिसन्ध्याय जपेदिष्टमेव ल-
भते ॥ ८ ॥ एष ते निरृतऽइति माꣳसङ्गृहीत्वा
जम्बुकास्थि वा सर्पेन्यस्य चतुष्पथेऽहोरात्रोषितः शि-

ऽसि सहस्राभिमन्त्रितं कृत्वा क्षिप्रं क्षिप्त्वाऽग्नेस्त-
राणो गच्छेद्यावत्क्षीतं तावद्दृष्टगुणं भवत्यनेनैव तु-
ष्कण्टकहोमो गृहान्नेतं तस्यान्नं गत्वाऽभिचारेण
होमविधानेनाग्निमुपसमाधाय शतसहस्रं जुहुया
च्छत्रुकुलमुद्धरति विषरुधिराक्तैर्ग्राममुद्धरति राजा-
नं नगरं चोत्सादयितुकामो वैकङ्कतकण्टकानां ती-
क्ष्णतैलाक्तानां विषरुधिरेण कटुतैलाक्तानां सहस्रद्वि-
गुणं शतसहस्रं जुहुयाद्धोमान्ते नदीं प्रस्रवणां
वा गत्वा कपिलागोमयेन लिङ्गं प्रतिष्ठाप्य पञ्चगव्येन
स्नापयेद्रुद्राध्यायं जपत्वा गुह्यकैः कर्तुं गीतिर्भव-
ति ह्यमोघं कर्मेत्याचक्षते ॥ ९ ॥ देवस्य त्वेत्यभिचर्य-
माणः स्रुवेणापामार्गतण्डुलाञ्जुहुयात्स्रुवं च तस्मि
देवाऽऽगमने च प्रतिमन्त्रमेते च प्रत्यङ्गिरोऽपो दे-
वाऽइति देवं वर्षयितुकामऽऔदुम्बरबिल्ववेतसवारणा-
द्दधिमधुघृताक्ताञ्जुहुयात्प्रजापते न त्वदिति महा-
व्याहृतिवत्कर्म । रुद्र यत्तऽइति पालाशसमिधो
जुहुयात्स्वयमुत्पद्यते पायसं जुहुयाद्घृतमधुमिश्र-
मथ यदमेवापामार्गोदुम्बरवारणानाममावास्यायामेत-
त्कर्म ॥ १० ॥ हंसः शुचिषदिति विरजो मन्त्रो
नाभिमात्रमुदकमवतीर्यादित्याभिमुखः शतसहस्रं
जपेदुपपातकेभ्यो मुच्यते द्विगुणेन महापातकेभ्य-

स्वतुष्कृत्वा सर्वान्वेदानवाप्नोति । चत्वारि शृङ्गेत्यार्षभो मन्त्रः सकृदभ्यसनादेवपूज्यो भवति द्रुपदादिवेति त्रिरन्तर्जले जपेदहोरात्रोषितो विपापो भवत्यथ महापातकसँय्युक्तः पञ्चगव्याहारो गोष्ठेऽग्निमुपसमाधाय गोमयेनानुलिप्ताङ्गोऽयुतं जप्त्वाऽष्टसहस्रं जुहुयाद्विपापो भवत्युद्वयमिति पापप्रणाशिन्यादित्योपस्थानं कुर्यात्पापन्नाशयत्यादित्यस्य सायुज्यमतोयादुदुत्यं चित्रन्तश्चक्षुरित्याभिमुखो जपेदनेनाहोरात्रकृतं दुष्कृतमपहरति देवा यज्ञमिति ब्राह्मणानुवाकं जप्त्वा ब्रह्मलोके महीयते । सुरावन्तमिति चतुर्ऋचेन पौर्णमास्याऽसँव्वत्सरं सोमसुतिष्ठेत ब्राह्मणायाग्रन्दत्त्वा भुञ्जीत क्षिप्रं सोमयाजी भवत्यश्विनाभिंषज्येनेति देवताऽभिषेकं कुर्य्याद्यद्देवाऽइतित्र्यृचं कूष्माण्डं हिरण्यगर्भो यः प्राणतो ब्रह्म यज्ञानं महीद्यौरुपयामस्यागृनेनय याते घर्म्म यमाय स्वाहेत्यष्टर्चं जप्त्वा सुरापानाद्ब्रह्महत्यायाः प्रमुच्यते । पितृभ्यः स्वधायिभ्यऽइत्यनुवाकशेषेणोत्तरेणानुवाकेन पितॄणामत्यर्थप्रियो भवति व्वसन्तेनऽऋतुनेत्याज्याहुतिसहस्रं जुहुयात्सविता वरदो भवति ॥ ११ ॥ इति यजुर्विधानशिक्षायां प्रथमोऽध्यायः ॥ १ ॥ शिवो भवेत्यग्न्युत्पाते सर्वव्रीहिरसवतीः

समिधः सहस्रं जुहुयादुपशमयति इन्द्राऽइत्यौदु-
म्बरसमिधो जुहुयाद्धनकामः परस्याऽइति वैकङ्क-
तीर्जुहुयाद्रणे परमस्याऽइत्यौदुम्बरीर्जुहुयादर्थसि-
द्धये । यः सेनाऽइति दुग्धमानीय क्षितौ जुहु-
याद्दस्युभयन्न भवति प्रतिकृतिं जुहुयाद्वा रै दण्-
ड्यभ्यामित्युग्रभयं जप्त्वा सर्वभयं नश्यति कुशकण्ट-
कहोमो द्विषन्मोहनाय व्यवहारेष्वन्नपतऽइत्यन्नं
जुहुयादन्नमुत्पद्यते सर्वोपकरणमिश्राणामन्नाद्याङ्ग-
तीनां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्नि-
मुपसमाधाय सहस्रं जुहुयाद्ग्राम्या व्रीहयोऽवव्या-
यन्ति ॥ १ ॥ सुपर्णोऽसीत्युगुभयस्य महाव्याहृति-
त्कर्म नमः सुतऽइति निगडबद्धो व्यसनस्थो वा जपे
न्निगडान्मुच्यते । नमो भूत्याऽइति वीरक्रमेण शत-
पुष्पीं क्रीत्वा जुहुयाच्छतशो मूल्यमुत्पद्यते । काम-
दुघामदुघऽइति कामधुङ्मन्त्या चतुष्पथेऽहोरात्रोषितः
करीषतप्तायां भूमौ सहस्रं घृतमाक्षेसेन जुहुयाद्ग्रा-
मं लभेदथ वा सुवर्णशतं गोशफेनाज्याहुतिसहस्रं जु-
हुयाद्गोकामोऽन्यच्च महाव्याहृतिवत्कर्म । मजूर-
ट्ऽइत्याज्याहुतिसहस्रं जुहुयाद्गोकामः ॥ २ ॥ या
ओषधीरित्यनुवाकेन वचामालोड्याभिमन्त्र्यारोपणं
कृत्वेन्दुग्रहे शुद्धामुत्पाद्य त्रिरात्रोषितस्ताम्रभाजने-

संस्थाप्य कपिलाघृतेनालोड्य पञ्चदशधाऽभिमन्त्र्य च न्द्रं दृष्ट्वा पिबेत्पयसा मासं भुक्त्वा श्रुतिधरो भवति या ऽओषधीरिति द्वाभ्यामोषधीरभिमन्त्र्य पाययेदगदो भवति। शतंवऽइत्याज्यमभित्यर्थफलानि जुहुयादारोग्यकामऽआयुष्मान्भवत्योषधी: प्रतिमोदध्वमिति बीजवापं कुर्यान्निष्पन्नसस्यो भवत्योषधीरितीति मातृनाम्न्योदुम्बरतिलयवापामार्गहोमो गोहिरण्यकामोऽश्वत्थे व ऽइत्यश्वत्थमित्पर्णहोमो गोधनकाम: पुरुषनाम्नि चैवा यत्रौषधी: समग्मतेति रक्षोघ्नो यक्ष्मोऽन्यवापि राध्न सविशाचडाकिन्यादिभीतस्याज्यहोमो ऽश्वावतीरित्यरिष्टनाम्न्या शान्त्यर्थं पयोन्नं ब्रीहींश्च जुहुयान्मुञ्चन्त्विमाऽइति बन्धनस्थो जपेन्मुच्यतेऽइष्कृतिरित्यात्मनिष्कृत्यर्थं होमोऽति विश्वाऽइत्यात्मशरीरे पावनाय जपहोमौ रक्षणाय च,यदिमाऽइति व्रीहिहोमोऽवनाशाय धान्यप्रतिकृतिनाऽभिचारे वशीकरणे च, यस्यौषधीरिति स सर्पनाम्न्याऽऽत्मपावनाय च दवहोमोऽभिचारे, साकंयक्ष्मेति यस्मिन्काष्ठे चाष उपविशेत्तदादाय घृतकृष्णमभिमन्त्र्य शत्रुगृहे निखनेद्दुष्टमति शत्रुगृहं क्षिप्रं पदे निखनेत्कुष्ठी भवति चाषपक्षेण सहस्राभिमन्त्रितेन गृध्रपक्षेण वा प्रतिकृतौ मर्मसु विद्धो म्रियते,ऽअन्यावऽइति वचो नाम्न्याऽऽ-

ाग्यकामो हस्तेनान्नं गृहीत्वा भुक्त्वा रोगात्प्रमु-
च्यतेऽस्या ऋगन्तरमङ्ग्ल्याऽष्टसहस्राभिमन्त्रितां ब्रा-
ह्मीं वचां वा प्राश्नीयात्परममेधावी भवति तथा च
त्वारो वर्णा वश्या भवन्ति, याः फलिनीरिति द्वा-
भ्याᳪ सर्वौषधीमिश्रेणोदकेन सहस्राभिमन्त्रितेना-
त्मानं स्नापयेदात्ज्ञोवकृतात्पापात्प्रमुच्यते ॥ ३ ॥
मुञ्चन्तु मेति रहस्यो मन्त्रः सर्वोपद्रवनाशनऽस्या-
गरमालब्ध्याष्टसहस्रं छित्त्वोपत्सर्वोपद्रवाञ्छमयति श्र-
भये वर्ध्यमानः करन्याङ्गुलीनाᳪ रक्षणाय ता-
न द्रव्याणि जुहुयाद्यात्ज्ञोत्रमन्त्रान्यक्षय्याणि भवन्ति,
ऽश्रोषधीरित्यगुभयेनौषधीमूलमुद्धरेत्कर्णे निधाय
र्वजनप्रियो भवति । याश्चेदमिति राजिकाभिः
तिकृतिं कृत्वाऽभिचरद्रव्यहोमोऽभिचारजपहोमश्चा-
नैव पालाशपत्रजालपाशग्रथितास्य न लोष्ठप्रद्वे-
ऽश्वात्मरक्षा शिखाबन्धश्चेति, नाशयित्री बलास-
श्चेति तुषलवणभस्ममिश्राणामन्नाद्याहुतीनां लिक्त-
केनाभ्यज्य चतुष्पथे शून्यायतने वाऽग्निमुपसाधा-
। शतसहस्रं जुहुयात्कृष्णाष्टम्यामारभ्य यावत्कृष्णा-
चतुर्दशी तावदुत्सादनं रात्रौ रक्तपुष्पारिर्गाधनमु-
याति मा वऽइत्यनेनातुरसियाद्वेष्यशान्तिकरणे प-
ग्रोऽन्नस्त्रीहीन्वा जुहुयादोषधयः समिति सार्वका-

मिकया महाव्याहृतिवत्कर्म त्वाङ्गन्धर्वोऽ इति पाप
रोगमोचनाय होमः सहस्र मऽइत्यादिवशीकरणे
पयोऽन्नं व्रीहीन्वा जुहुयात् ॥ ४ ॥ मा मा हिंसी
सीदित्यभिचर्य्यमाणऽआज्यं जुहुयाच्छान्तिर्भव,त्वस्मा
वर्त्तेति वर्त्म कपामारायायुतं तिलतण्डुलाञ्जुहु
यात्तेनं च जातस्सँल्लभते दधि मधुघृतं जुहुया
दृग्रामँल्लभतेऽग्ने तवेत्यन्नं जुहुया दृष्टिर्भवति, इष्क
त्तीरमिति मधुलवणहोमः स्त्रीपुरुषाणां सौभाग्य
कामः स्त्र पुरुषयोरनिच्छतो दधिमधुघृतं जुहु
यात्प्रीतिर्भवत्यनावानमिति व्रती भूत्वा,इसहस्रमाज्या
हुतीर्जुहुयात्सिद्धवागभवत्याते वत्सऽइति तथैव कुर्या
द्वर्णविद्याबन्धनकार सुभ्यन्ताऽअग्निः प्रियेषु स्वस्ति
नऽइति त्रिभिः पलाशसमिधां दधिमधुघृताक्तानाम
युतं जुहुयात्कार्षापणानाँ सहस्रमुत्पद्यते सिद्ध
तम् ॥ ५ ॥ प्रातर्हीने दिने द्रप्सऽइति दधिशासयत
होमः पशुपुष्टिकामस्य च नमोऽस्त्विति घृतपायस
नागस्थाने जुहुयात्सुवर्णमुत्पद्यते याऽइषवऽइति विले
प्रविष्टं सर्पं दृष्ट्वा तत्रैवाज्याहुतिसहस्रं जुहुया
त्सुवर्णशतद्वयमुत्पद्यते सिद्धे तद्वं नष्टे सुवर्णमभोघ
कर्मेत्याचक्षते कोटरावस्थितस्याप्येवं विधिरिष्यते क
णुष्व पाजऽइति प्रत्यङ्गिरे जपेदुद्वयनऽइति शत्रोर्नि

मध्याह्ने तुषकण्टकराजिकासर्षपाणां विषरुधिराक्ता-
नां जुहुयाद्दन्त वश्यो भवति शत्रोः क्रुद्धस्य जपेत्तुष-
कण्टककणसर्षपान्वा जुहुयाद्वशीकरणम् ॥ ६ ॥
काण्डात्काण्डादिति द्वाभ्यां दूर्वाप्रवालानामयुतं जुहु-
याद्ग्रामे जननमरणमुपशाम्यति द्विगुणेन नगरे त्रि-
गुणेन देशे मधुनान्नऽइत्यष्टौदुम्बरीर्जुहुयाद्बहुकामो-
ऽपाक्रामन्निति देवर्षयितुं कामऽउदुम्बरविल्ववेत-
सवारणानां पूर्वं दधिमधुघृताक्तानामयुतं जुहुयान्म-
हाङ्ष्टिं वर्षति निर्दूर्वेति यवमुष्टिसहस्रं जुहुयादप्र-
तिहतवाक्यो भवत्यग्ने जातानित्यनेन महाव्या-
हृतिवत्कर्म द्विगोत्तराहर्चं यस्मृऽइत्यनेनानुवाकेन
द्वे वा व्याहृतं कर्मव्याचक्षतेऽथ वशीकर्तुमिच्छन्पला-
शश्वत्थापामार्गविल्ववेतसमावासकणाब्दोदकसमिधो
दधिमधुघृताक्ता जुहुयात्सर्वे वशी वश्या भवन्ति ॥
४ ॥ अथ राज्यकामः पद्मकुमुदसौगन्धिकोत्पला-
नीनि भगवतो महेश्वरस्योभयतश्चन्दनाक्तानि शिर-
सि शतसहस्रमारोपयेत्सहस्रास्तस्य श्रीरूपेयाद्वा-
ऽभ्याद्ययत्पुरुषाद्वोराद्वा विकश्येन्न त्रिगुणेन साक्षादु-
ऽपतिष्ठतेऽपत्यनिष्ठाणां वेति अश्वत्थराजहनसमिधा-
ऽयवएव विधिर्देवस्य दक्षिणायां मूर्तौ सघृतं गुग्गु-
लनष्टसहस्रं जुहुयात्षट्सहस्राणि वा न व्याहृतं

कर्मेत्याचक्षते यथा सिद्धे महानसेऽष्टावष्टसहस्
जुहुयाद्द्रव्यमव्यवच्छिन्नमक्षय्यं भवति । मा नो रुद्र
न्तमिति तिलाहुतीनामयुतं जुहुयाद्गृहे बालान
परिजनस्यारोग्यं भवति मा नस्तोका इत्यगुल्मानि क
र्माणि भवन्ति ॥ ५ ॥ नमो हिरण्यबाहवइति षड्भि
रनुवाकैः कटुतैलाक्तान् राजसर्षपाञ्जुहुयाच्छत्रुरुत्साद
यति फट्कारेण देवस्योपरि मालायामधः शिरसम
यतंस शस्त्रेण शिरसि रुधिरं स्राव्य स्नायेच्छिक
टुकेनाभ्यज्य देवं कराङ्गुलिनखैर्नोत्पाद्य शत्रोर्नाश
मारक्ष्णपेत्सर्वलर्दं० शत्रुसुत्सादयेदेवं कृत्स्नं ग्रामं
नगरं वैराग्रहा राजानमक्षोरात्रेण ब्राह्मणमर्द्धेन
क्षत्रियं त्रिभागेन वैश्यर्द० षड्भागेन शूद्रर्द० स्त्रिय
वा व्याहृतं कर्मेत्याचक्षते ॥ ६ ॥ अथ वशीकर्तुमिच्छ
न्पालाशाश्वत्थापामार्गवैकङ्कतबिल्ववेतसोशीरादीन्प्र
तिवर्णं प्रतिमन्त्रं दधिमधुघृतक्षाराक्तानामयुतं जुहु
यात्क्रमशो वर्णचतुष्टयं वशमानयत्यथ राज्यकाम
कुमुदसौगन्धिकनीलोत्पलादीन् पूर्वकल्पनारोपदेत्सा
क्षाच्छ्रीर्भगवती तूपतिष्ठते नमः सिकत्यायेति क
लशमभिमन्त्र्याष्टशतेन राजानं स्नापयेत्सर्वविनाय
केभ्यो भयं न भवति रोगाभिभूतं स्नपयेन्मुच्यते स
र्वरोगैर्नमो वः किरिकेभ्यइति तिलाहुतीनामयुतं जुहु

यात्कार्षापणानाꣳ सहस्रमुत्पद्यतेऽपामार्गसमिद्भिः सु-
वर्णं गुग्गुलप्रतिमानां चतुर्गोत्कृत्याष्टसहस्रं जुहुयादल-
ङ्कृतां कन्यां लभतेऽथ वा सुवर्णशतं गोशकेनैका
दशसहस्रमाज्यहोमात्तावतो गावः स्वस्तितण्डुला-
नाꣳ शतसहस्रेण सर्वसम्पदस्य तिलयवधान्यशतपु-
ष्पमयीं प्रतिकृतिं कृत्वा जुहुयाद्राजमान्यवश्यौ स्याता-
मुत्पलपद्मानाꣳ शतसहस्रेण स्वरूपिणी राजलक्ष्मीर्भ-
वति चणकमितानां गुग्गुलगुटिकानाꣳ शतसहस्रं
जुहुयात्स्फीतसामन्तराजो प्राप्नोति देवस्य दक्षिणायां
मूर्तौ बिल्वसमिद्भिर्महाराज्यं रूढा चतुष्पथे वल्मी-
कमृदा गोमयेन लिङ्गं प्रतिष्ठाप्य रुद्राध्यायेनाभि-
संच्याष्टतया पायसमन्नं बलिमुपहरेद्भूतेभ्यो भूति-
कामो देवस्य दक्षिणस्यां मूर्तौ वचाफलमर्धं वा स्वल्पं पि-
ष्ट्वा ताम्रभाजने न्युप्य कपिलघृतेनालोड्य प्रादेशिन्या-
ष्टसहस्रमभिमन्त्र्य पिबेदप्रतिहतवामः स्याद्वाक्सि-
द्धिश्चोदुम्बरसमिद्भिर्दध्यक्ताभिर्गवां स्वामी स्यान्न च
गावः क्षीयन्ते बिल्वफलैर्घृताक्तैः सुवर्णमासिद्धे रज-
तमेतेनैवोदुम्बरामलकौ हरीतकिविभीतका व्याख्या-
ताः ॥ ७ ॥ अन्तर्धानमिच्छन्पर्वतशिखरमारुह्य का-
लभुजगस्याञ्जनं सहस्रमभिमन्त्र्य देवस्य हस्ते निवे-
द्य तावज्जपेद्यावद्धूमायते पूर्णे शतसहस्रे प्रज्व-

अथापि उज्ज्वलत्यग्रायमाणे सर्वलोकवशीकरणं घृ-
तामाने पादप्रसारित्वं ज्वलिते चाकाशगामित्व-
ठं० रुद्रदुरो शयांकाभः ससुद्रान्तां पृथिवीं पर्यटेद्
दुःखानुचरो भवति पद्मपुष्पाणाᳶ सुरभिचन्दनाक्तानां
घृतपूर्णाक्तानां वा चतुष्पथे शून्यायतने वाऽग्निमु-
पसमाधाय शतसहस्रं जुहुयात्स्वयमेव श्रीरूपातिष्ठ-
तेऽनेन यथेच्छति तथा करोति द्रापिऽअन्धसऽइत्यान्यं
जुहुयाद्वासाएश्चत्वारि सर्वाल्ल ॥ ८ ॥ इमा रुद्रा-
येति तिलाञ्जुहुयादयुतमयाचितं धनं स्यान्महारोगो-
पघाते दूर्वाप्रवालैर्तायद्दीर्घायुर्भवत्यऽथ जनशानि पु-
ष्टिकामो दधिमधुघृतपायसं जुहुयान्महाग्रहभूत-
पिशाचादिभ्यो मोचयति वैकङ्कतसलाशसमिद्भिर्घृ-
ताक्ताभि युतं जुहुयादाभिचारिकभयं न स्यान्महा-
जनेनाभिभूयमानस्तथा जुहुयाच्छाल्मलीवैकङ्कत्यौ-
दुम्बरायवतिलानां चायुतं जुहुयाद्दश्ये गवामुपघाते
गोष्ठेऽध्यऽग्निमुपसमाधाय वैकङ्कतसमिधो जुहुया-
च्छान्तिर्भवति यावन्तश्चतुष्पदास्तेषामेष विधिर्जनमरणे
चये वायुतं तिलाञ्जुहुय दृष्टह्यामनगरमध्येऽग्नि-
मुपसमाधाय सुमजनेषु चतस्रषु दिक्षु देववलीन्
दत्वा वलिर्भ रचितः कर्म कुर्यादोदनघृततिलपिष्ट-
माषान्नपरमान्नगुडशर्करादीनि देववलिमुपहरेत्सर्वं क्रा-

पुष्पाणां२ रक्तचन्दनाक्तानां घृतपूर्णानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय शतसहस्रं जुहुयाद्दुर्वशोऽप्रतिमा कन्यालभतेऽथ वा सुवर्णशतमयमग्निः सहस्रिणऽइति महाव्याहृतिवत्कर्म गवार्ठ० शांतिर्भवति गोशकेनाज्याहुतिसहस्रं जुहुयाद्गृशतं लभेदनेनैव समिद्धोमो हिरण्यपशुकामस्य सहस्रस्येति महाव्याहृतिवत्कर्म महाव्याहृतिवत्कर्म ॥ ६ ॥ इति यजुर्विधाने द्वितीयोध्यायः २ । नमस्तऽइति चतसृभिः प्रत्यृचं यवगोधूमगवेधुकजातिलान्वा दधिमधुघृताक्तानेकाहं जुहुयाद्ग्राम्यं वज्रं भवत्येकादशरात्रेण जनमरणमुपशाम्यति पञ्चदशरात्रेण वा राष्ट्रोपद्रवंन्त्रिर्ठ०शतिरात्रेण देशोपद्रवं मासेन पृथिव्युत्पातं गवामुत्पाते गोष्ठेऽग्निमुपसमाधाय वैङ्कृतसमिधामयुतं जुहुयाच्छान्तिर्भवति द्विगुणेन महाशान्तिर्भवति ॥ १ अस्य राचदिति सर्वत्र रक्षा कर्तव्या उरगेभ्यश्च सर्षपान्समभिमन्त्रितान्कृत्वा चतुर्दिक्षु क्षिपेत्सर्वत्र रक्षा कृता भवति पथि गच्छन्क्षिपेत्क्षेमेण गच्छति सर्षपैर्हुत्वा राक्षसभूतप्रेतपिशाचादिभ्यो मोक्षयति तैः सर्षपैः स्कन्दग्रहादिभ्यः शिवोपरिजप्याभितो विहाय रात्रौ सर्पद्रोगभयं न भवेत्सर्वरोगशमनायौषधमभिमन्त्र्य प्राशयेदनेकेन सर्वसत्वानार्ठ० सर्पैः सर्पाणां भस्मना

सर्वभूतानाᳫं स्तनमण्डलवन्त्यादग्निहोमेन लोहेन निग्रन्तᳫं सहस्रमभिमन्त्र्य नागह्रदि क्षिप्तकुल-वान्स्यो नागो नाशं गच्छति तालशब्देन भस्मनाऽती-वसम्मात्सादनं करोति॥ २ ॥ असौ य ऽइत्यृग्द्वयेनाहो-रात्रयोरादित्यमुपस्थायाक्षय्यमन्नं भवति एवं दधिदु-ग्धघृतेन स्नापयेद्रोगान्मुच्यते सविता प्रसन्नो भवति वर्षति वाऽतसीपुष्पाणामयुतं जुहुयादवश्यो वश्यो भवति सविता वरदो भवत्युदकसक्ताहारो वेतससमि-धां गुडक्षीराक्तानामयुतं जुहुयाद्भगवानादित्यो म-हावृष्टिं प्रमुञ्चति नमोऽस्त्विति घृतपायसᳫं स्थंडि-लमुपलिप्यार्कप्रस्तरपञ्चप्रस्तरे वा कृष्णाष्टम्यामारभ्य यावत्कृष्णचतुर्दशीᳫं सहस्राभिमन्त्रितं कृत्वा निवे-दयेत्कार्षापणानाᳫं सहस्रमुत्पद्यते सिद्धे घृतम् ॥ ३॥ प्रमुञ्चेति षड्भिरायुधान्यभिमन्त्र्य सङ्ग्रामोपनीताः शत्रवः पलायन्ते न चाभिमुखास्तिष्ठन्ति दर्भकण्टका-नामयुतं जुहुयादनामिकाङ्गुलिनखेनोत्पाद्य श-त्रोर्नाम स्वाङ्गपत्त्रवन्तᳫं शत्रुमुत्सादयेद्ग्रामं न-गरं वैकेनान्हा राजानं प्रभूतशस्त्रवन्तं क्षत्रियं दिव-सत्रिभागेन चतुर्थेन वैश्यं षड्भागेन शूद्रᳫं स्त्रियं रक्षोभूतेभ्यो रुद्रेभ्यः पलाशपुटेष्वेवमर्द्धमासेन जनम-रणमुपसंयतीकृन्तनमुन्यन्ते: शान्तिषु यथोक्तेन व-

शोकरणमभिचारश्च शान्तिर्भवति ॥ ९ ॥ या ते रुद्रे-
ति जीवोर्णायाः प्रतिसरꣳ सहस्राभिमन्त्रितमेका-
दशग्रन्थियुतं बालानां गर्भिणीनां च हस्ते बध्वा ता-
श्च सुखेन वर्द्धते धनिकधारणिकेभ्यो भयं न भवति
परि नऽइति वटप्ररोहसमिधोऽयुतं जुहुयादायु-
ष्मन्तः पुत्राऽउत्पद्यन्ते मीढुष्टमेति महाभये चोरभये-
ऽग्निभये प्राणसꣳशये सङ्कटे वा मनसा जपेत् क्षेमे-
णागच्छत्यायाति च विकिरिद्रेति महाजनविरोधे रा-
जा वा प्रत्यनीकपरिजनः सर्वव्रीहीञ्जुहुयात्सर्वे
भग्नमनसः शत्रवः पलायन्ते सहस्राणीति महाज-
नमरणे राज्ञोपद्रवे वा शाल्मलिविकङ्कत्यौदुम्बरस-
मिधो यवतिलान्वैकादशकृत्वोऽभिमन्त्र्य शतसहस्रं
जुहुयात्कृशरापायसेन भूतेभ्यश्चेद्विडालमात्रेण रा-
क्षसान्मुच्यतेऽसङ्ख्यानीति रक्तवासा रक्तोष्णी रक्त-
माल्यानुलेपनो देवमभ्यर्च्य श्मशाने एकवृक्षे नदीपु-
लिने चतुष्पथेऽरण्ये वैकादशशरानर्कमूलपरिवेष्टि-
तान्महाजातैलाक्ताञ्छ्मशानाग्नौ प्रदीप्ते प्रक्षिपेद्दश-
र्चेनैकादशाभिमन्त्रितेन तद्भस्मना शत्रोः प्रतिकृ-
तिं कृत्वोरसि कटुतैलेनाभ्यज्य दक्षिणभूभागेऽवस्था-
प्य एकैकेन सहस्राभिमन्त्रितेन शरेणैकादशसु प्राणा-
यतनेषु विध्येदासहस्रयोजनगतꣳशक्रलोकगतं वा

मनुमुत्पादयेद्देवासुरयक्षगन्धर्वरक्षोभूतपिशाचादीन् शा-
न्त्यर्थं देवं घृतक्षीरेण स्नापयेद्रुद्राध्यायेनाभिमन्त्र्य मा
नस्तोक इति वा घृतमधुपायससमयुतं जुहुयादघो-
देशमधिष्ठाप्य कर्पटगृहादिषु मध्यतऽएषऽएव विधिरु-
त्पादने फट्कारेण सर्वकर्माणि कारयेत् ॥ १० ।
नमोऽस्तु त्रिकेण मध्याह्ने तुषकण्टकाञ्जुहुयात्सर्षपा-
न्वाऽहरहर्महाप्रत्यङ्गिरेऽष्टौ देवयोनयः सपिशाचाश्चरन्-
ति निशाचराः शृण्वन्ति ये यातुधानास्ते सर्वे भस्मी-
भवन्त्यथ प्रदीप्तेऽग्नौ स्वकेशानालुप्य जुयाद्राक्षसशू-
लहस्तऽउपतिष्ठते यदुच्यते तत्करोति अथ वा ग्राम-
मुत्सादयति ॥ ११ ॥ अथ वा कृत्यामुत्पादयितुं कामो
रक्तवासा रक्तोष्णीषो रक्तमाल्यानुलेपनो देवमभ्यर्च्य
श्मशानाङ्गारेषु लोहकीलान्प्रादेशमात्रान्महातैलाक्ता-
नाष्टसहस्रं जुहुयादुत्तिष्ठति रक्ताङ्गी रक्तनेत्रोर्द्ध्वके-
शी कृत्वा तां क्षिप्रमेव रुधिरमांसेन पूर्णपात्रेण तर्पये-
दन्यथा कर्त्तारमेव छिनत्ति सा त्वरितापतेति नाम-
कदूतिकान्वधिष्यामीति वक्तव्यामुकं व्यापादयति
सा तूर्णं वधमुत्पादयति यामाज्ञापयति त्रैलोक्याव-
स्थितमप्युत्सादयत्यथ वैकैकस्य शरीरस्य ग्रामे गृहे न
गरे वा व्याहृतं कर्मेत्याचक्षतेऽथ प्रयोगः शाकयाव
कपयोभक्षो द्वादशरात्रमुपोष्य लघुभ्यो लघूनि गुरुभ्यो

शुक्लानि सहस्रेषु सहितेषु महाग्नि तुलापुरुषचान्द्रा-
यणमध्यतऽएत्रऽएव विधिः कल्पग्रहणे त्वाचार्यमभिवा-
द्यावलम्ब्य पठेन्न चैवान्यथा पठेदिति न चैवान्यथा प-
ठेदिति ॥ १२ ॥ इति ऋग्विधाने तृतीयोऽध्यायः । ३ ।
परस्यात्मऋजर्ठं० सङ्क्रामयितुमिच्छन्कर्तुं शिलां कृ-
त्वा कुम्भोदकपूर्णेन सहस्राभिमन्त्रितेनात्मानं ठं० स्ना-
पयेद्ब्रह्मन्नूर्जमिति प्रदक्षिणं परिहृत्य कुम्भे शिलां कृ
त्वा यतोनामग्राहं यं द्विष्मऽइति निरस्तेत्कुले सर्व-
ऋजस्तस्य सङ्क्रामन्ति विश्वतश्चक्षुरिति महाव्याहृति-
वत्कर्म देवस्य दक्षिणायां मूर्तौ मधुघृतपायसान्नानां
पञ्चानार्ठं० सहस्रं जुहुयात्स्थण्डिलमुपलिप्यार्कप्रस्तरे
कृष्णाष्टमीमारभ्य यावत्कृष्णचतुर्दशीं सप्ताहं सुवर्णं
लभते यो नः पितेति महाव्याहृतिवत्कर्म ॥ १ ॥ आ-
शुः शिशानऽइत्यनुवाकेनाप्रतिरथेन रथमायुधमात्मानं
चाभिमन्त्र्य सङ्ग्रामे प्रविशञ्जयो भवति चोरमहिष-
व्याघ्रसिर्ठं०हराक्षसमर्पादिभयेषु मनसा जपेत्क्षेमं
भवति यमिच्छेत्स्तम्भयितुं तमनेन स्तंभयेदुद्वेनमित्युद्व-
त्सरमिदाउत्यहोमः प्रजापशुपुष्ट्यर्थे स्वयं भिन्नरित्य-
र्कसमिद्भिः सुवर्णमुत्पद्यते विमानऽइति द्वयोर्महा-
व्याहृतिवत्कर्म मध्यन्दिने समुद्रगां नदीं गत्वा द्वी-
पमध्येऽग्निमुपसमाधाय घृताक्तानां कृष्णतिलाना-

ढं॰ शतसहस्रं जुहुयाद्धिमानैस्त्वन्द्रवर्णैः समारूढाः स-
र्वालङ्कारभूषिताः सपरिच्छदाश्चाप्सरसऽआगच्छन्ति त-
त्र सर्वालङ्करणानि वासाᳫंसि मुक्त्वा विवाससः स्वा-
नि गुह्यायतनानि दर्शयन्त्यो जले क्रीडन्ति यदि ता-
नि दृष्ट्वेन्द्रियविकारो भवेद्रुद्देवपदं ददाति तदा तस्मै
चत्र दृढव्रतोऽग्रे सङ्गानीक्षमाणस्तावज्जपेद्यावदुदक-
मुत्तीर्य वासाᳫंसि परिधाय यावन्ति दिव्यैः सुगन्धि-
चन्दनैरङ्गानि विलेपयन्ति पाणौ गृहीत्वा विमाने स-
मारोपयन्ति तासाᳫं सर्वाधिपतिर्भवति ताभिः सह
लोकं गच्छति यं भोगं कामयते तं कुरुते मध्यन्दि-
ने चादुम्बरतिलैर्यवधान्यापामार्गहोमः सोऽर्थप्रदाना
य देवकन्यां पश्यति कन्याऽइवेत्यर्घं दद्यादनेनैव विधि-
ना महाव्याहृतिवत्कर्म प्रतिदिवसमित्याज्याहुति-
सहस्रं जुहुयात्प्राचीमनुप्रदिशमित्याज्यसहस्रं जु-
हुयाद्द्विपदचतुष्पदकामोऽग्नेसहस्राचेति सहस्रना-
म्ना पृथगुक्तानि कर्माणि भवन्ति ॥ २ ॥ ताᳫं सवितुरिति
सहस्रधारया गोमयᳫं सहस्राभिमन्त्रितं कृत्वा संक्षि
प्य गोरक्षायाद्यान्नोमस्य गावो न क्षीयन्ते दुह्यमा-
नायास्तस्या नाम गृहीत्वा परिवेषणं कृत्वोदकमवती-
र्य तावज्जपेद्यावन्मुक्तो धेनुं लभते शमीसमिधो जुहुया-
दृषभादिकᳫं शतँल्लभतेऽत्र वा गोशक्तेनाज्यं जुहुया-

द्गोशतं लभेदेतेनैव हस्त्यश्वमहिषाजाविका व्याख्याताः घृतदुग्धाहुतीनां वारणेन स्रुवेणाष्टसहस्रं जुहुयाद्धोमान्ते दशमहिषीर्लभते विधेमतऽइति वैकङ्कतीभिः सर्वसम्पद्वः स्यात्प्रेद्ध इति दध्यौदुम्बरीभिस्त्रिमिद्भिर्ह्रध्यक्तमयुतं जुहुयाद्गृहेऽन्नमक्षय्यं भवति ॥ ३ ॥ सप्ततऽइत्याहुतिसहस्रेण तेजस्वी भवत्युदुम्बरापामार्गतिलतण्डुलैः सप्तदशसहस्राणि जुहुयात्सप्तसुवर्णं लभेत्सर्वकामिकी या सृक् सकृदुदुम्बरपात्रेण पूर्णाहुतिहोमेन यं लभते सङ्घाते शुक्रज्योतिरिति सप्तवारं जपेच्छान्तिर्भवति इन्द्रं दैवीरिति जातिकलिकानां सुरभिचन्दनाक्तानां घृतपूर्णानां चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयात्सर्वालङ्कारभूषितां एव कन्यां लभते ॥ ४ ॥ इमं स्तनमिति समुद्रगां नदीं गत्वोदकमवतीर्यायुतं जप्त्वाऽष्टसहस्रं जुहुयाद्ग्रामं लभते घृतधारयाऽर्कपुष्पाणि वा सुप्रविश्य अयुतं जुहुयादुदुम्बरपत्राणां सवत्सां गां लभते जपेद्धेनुं लभते घृतं मिमिक्षऽइत्येकादशभिराज्याहुतिसहस्रं जुहुयादप्सु प्रविश्य जपेद्गोभयं न भवति वाजश्चेति सप्तभिः पावमानैराज्यं जुहुयादप्सु जपेद्विरोगो नश्यति पशुकामस्यैवं व्रीहयश्चेति सर्वव्रीहीन्पयसा शतसहस्रं जुहुयाद्ग्राम्यव्रीहयोऽक्षय्या भव-

न्ति च पुष्णाति ॥ ५ ॥ विश्वेऽअद्येति महाव्याहृतिवत्कर्म वाजो नऽइति त्रिभिर्व्रीहीञ्जुहुयादयाचितेन धनमाप्नोति सम्नेति पयोदधिमधुघृतमिश्रान्सर्वव्रीहीञ्जुहुयाद्वर्षति ॥ ६ ॥ ऋताषाडिति षड्चेनाज्याहुतिसहस्रं जुहुयाद्वर्षति स नो भुवनस्येति गृहवास्तुभ्यऽआज्याहुतिसहस्रं जुहुयाद्वास्तुदोषैर्न लिप्यते याःसऽइति सौभाग्यकामो जपेद्वटप्ररोहसमिद्भिः पुत्रकामो दिवो मूर्द्धेति महाव्याहृतिवत्कर्म मूर्द्धन्वित्यप्सु होरात्रं प्रविश्य जपेदहोरात्रं वर्षतोदर्द्ध० हविरित्यात्मनस्त्वोजोवत्सवद्दे पयसा होमऽइन्द्रियविकलो जपेत्पूर्णेन्द्रियो दीर्घायुः प्रजावांश्च स्यादग्नऽआयूंषीत्याज्यं हुत्वा शत्रुगृहे प्रविश्य जपेन्मित्रमिवोपचर्यतेऽपांफेनेनेति जयकामो लाजाञ्जुहुयादाज्यं वा यो भूतानां त्रातारमिति च महाव्याहृतिवत्कर्म महीमूषु टचेन नावमारोहेत्क्षेमेण तरति ॥ ७ ॥ हिरण्यपाणिमूतयऽइत्यर्कसमिद्भिर्युतं जुहुयात्सुवर्णमुत्पद्यतेऽजीजनऽइति रहस्यो मन्त्रऽएतेन नागा वशमुपयान्ति लोहं त्रिशूलर्द्ध० सहस्राभिमन्त्रितं कृत्वा दक्षिणपादेनाक्रम्य पयोदधिमधुघृतैरयुतं हुत्वा विकृतरूपास्त्रियऽउत्तिष्ठन्ति किमस्माभिः कर्तव्यमिति ब्रुवन्त्योऽभिरुचिकामेन ताऽआज्ञापयेत्नमोऽस्तु सर्पेभ्य-

ऽइति तिसृभिरर्घं दद्यादग्न्यागारे गोमयलिङ्गं प्रति-
ष्ठाप्य पञ्चगव्येन संस्नाप्य दक्षिणतः शूलं निखनेत्पु-
नः सहस्रं जपेत्सुवर्णशतंलभेतृसिद्धं कर्मेत्याचक्षते दृ-
ष्टौ शिखण्डानलसीपुष्पाणि वा युञ्जन्तीति महाभये
जपेदभयं भवति सर्वकर्मासु मध्ये कृच्छ्रेण गायत्र्या घृत-
सहस्रं जपेत्पूर्वमेवैतत् ॥ ८ ॥ गणानां त्वेत्यौदुम्बर-
तिलयवापामार्गधान्यादिहोमार्थप्रदस्तुष्यथे वैतद्वशी-
करणे पिचुमन्दपत्रैर्हुत्वा त्र्यम्बकप्रतिकृतिं वल्मीकस्य
दा कृत्वाऽर्च्चयेन्मार्ठं॰समाषोदनमपूपतिलपिष्टकपर-
मान्नफलपुष्पादिभिर्बलिमुपहरेद्वक्रतुण्डस्यैतानि क-
र्माणि भवन्ति सर्वं तस्येद्वः स्याद्गायत्री त्रिष्टुबिति पञ्च-
भिः शङ्खेनाज्याहुतिसहस्रं होमात्सिद्धिः॥ महाना-
म्न्यऽइति खादिरस्रुचा तिलतैलं निष्क्रम्याऽष्टसह-
स्रं जुहुयाद्बन्धबन्धान्मुच्यते वैकङ्कतकण्टककटुतैल-
विषरुधिराक्तानां द्विगुणं शतसहस्रं हुत्वा सगणं॰
राजानमुत्सादयति॥ ९ ॥ अथ वशीकर्तुमिच्छन्दिखां
परिजप्य बिल्वकण्टकान्हुत्वा राज्ञो रुक्मभेदं जनये-
त्सर्वं च मध्यमकृच्छ्रो गायत्र्या लक्षं वेन्द्रस्य क्रोडऽइत्यु-
दरमभिमन्त्र्य रात्रौ स्वपेदुदरविकारो न स्यादिष्ट-
तिमित्याज्याष्टसहस्रं भूमिलाभाय जुहुयाज्जम्ब-
कायेति वरुणकृदपोमन्त्रोऽश्वमेधावस्थैर्युक्तो ब्रह्मह-

ष्याया: प्रमुच्यते सकृदन्तर्जले जप्त: संवत्सरकृतं स्तेयमतिहरत्यानो भद्राऽइत्यनुवाकर्ट॰ सततं जपेदायुष्मान्भवति भद्रं कर्णेभिरिति जपेत्पूर्णेन्द्रियो दीर्घायुश्च यद्द्वध्यमिति जप्त्वा नावसीदति नावसीदति ॥ १० ॥ इति यजुर्विधाने चतुर्थोऽध्याय: ॥ ४ ॥ अग्निश्चेत्यवश्यं जपेत्स्वग्राममानयति सकामानिति परेण व्यवहारे जपेत्सिद्धिर्नोनादृत्यौ तुल्यौ ॥ यथेमामिति चिप्रं कर्माऽऽरम्भे सिद्धि: प्रियो देवानामिति महाव्याहृतिवत्कर्म ॥ बृहस्पतेऽअतीति धनाय जपेदग्निर्ऋषिरिति तिलानयुतं स्रुवेणोद्यम्य गार्हस्थ्यं न क्षीयते धान्यमक्षय्यं स्यात्समास्त्वेति नवर्चेन पायसाहुतीनामयुतं जुहुयाद्गोष्ठमध्येऽग्निमुपसमाधाय गोमयेनादीप्य यावतीमिच्छति तावतीं हुत्वा सम्पिता धेनुर्लभते ॥ १ ॥ समास्त्वेत्यन्यं ज्वलितमग्निमभिहुत्यास्वसमिद्धं ततोऽन्यत्रापि शत्रवो विद्रवन्ति सच्चेति वैकङ्कतीभिर्यथोदधिमधुघृतै: सौभाग्यं त्वामग्नऽइति तुषकण्टकै: शत्रुनाश अयुतमाज्येन जपऽइहैवेत्यन्नाज्येन हुत्वा श्रियं विन्दति चत्वेणेति अयायाज्यं हुत्वा नामग्राहमतिनिहऽइत्यग्निमुपहृतार्चि: परैरवरुद्धोऽनवरुद्ध: स्यादेनाद्दग्धऽइत्यग्निं प्रज्वाल्योल्कामण्डलं बध्वा भयं नाशयति बृहस्पते सवितरिति दधिमधुघृते-

हुत्वा सुभगः स्यात्कन्यादानसमये१०००जपेद्यावज्जीवं सौभाग्यं भवत्यऽमुत्रभूयादित्यायुः कामो दूर्वानभिघ्नतुषाज्जुहुयात् ॥ २ ॥ ऊर्ध्वोऽअस्येति वैकङ्कताभिः शत्रुभयं नश्यति जातीकण्टकैर्वचनविधेयस्य तनूनपादसुरऽइति न्यग्रोधमूलेऽग्निमुपसमाधायाशोकपुष्पाणां घृताक्तानाᳫं शतसहस्रं हुत्वाऽसुरकन्यां पश्यति दृष्ट्वाऽनुवाकशेषे न दद्यादग्निमुखे दिव्यᳫं सुवर्णं प्रयच्छति नचेत्तूष्णीमनुगच्छेद्गृयान्निवर्तते विलप्रवेशनकाले पाणौ गृहीत्वा प्रविशति त्रिरात्रोषितस्तत्स्वामी भवति राये न्वित्यनुवाकशेषं निवाते जपेद्वातो वात्येकया च तिसृभिर्घृतं जुहुयाद्वातरोगान्मुच्यते ॥ ३ ॥ अभित्वेत्यहोरात्रं जपेद्वर्षति कया नऽइति माषोदनं तिलमिश्राणामन्नानां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयाद्धोमान्ते चित्राङ्गदो विद्याधरराजो दिव्यᳫं सुवर्णराशिं ददाति ॥ ४ ॥ ऊर्ज्जोनपातमिति दधिमधुघृतैरापद्भ्यो मुच्यते ॥ संवत्सरोऽसीत्याज्यमष्टसहस्रं हुत्वा यावज्जीवमारोग्यं स्यात्प्रेत्याऽइति मधुतिलाक्तशतसहस्रं जुहुयात्सुवर्णमुत्पद्यते न च कश्चिदभिहतो भवति ॥ ५ ॥ केतुं कृण्वन्नित्यनुवाकेन रथं शस्त्रमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविश्य जपेज्जयो भ-

वर्ति धन्वनागेति धनुर्वेदमन्त्रः स्वाध्यायाद्यावद्गणदी-
क्षितः क्षत्रियो भवति सा च दीक्षा त्रिविधा गोब्रा-
ह्मणदेवस्वाम्यात्मनां हितायेत्यात्मानं सन्नह्यतऽइ-
ति मर्माणितऽइति कवचं परिधत्ते धन्वनेति धनुर्यो-
नयेत्ते ऽआचरन्ती इतिविस्फुरणं वक्ष्यन्ती वेदिति
ज्याभिमर्शनमहिरिवेति हस्तवेष्टनमभिमन्त्रयते ब-
ह्वीनां पितेति तूणं कलापमभिमन्त्र्य परिधत्ते सुपर्णमि-
ति नैर्ऋत्यां दिश्येकमिषुं क्षिपेदपऽउपस्पृश्य वनस्पते
वीड्वङ्गऽइति रथमालभ्य युञ्जन्तीत्यश्वयोजनमसि यम-
ऽइतिवन्धनमाशुः शिशानऽइत्यनुवाकेनालभ्य विष्णोः
क्रमऽइत्यारुह्याजङ्घन्तीत्यश्वताडनमक्रन्ददित्युत्सर्जनमा
ने जपेद्याः सेनाऽइति परसैन्याभिमुखं रथं
वाहयेद्रथे तिष्ठन्नित्यवस्थापयेत्सदुन्दुभऽइति दुन्दुभि-
त्ताडनमहिरिवेतीषुं गृह्णाति यत्र बाणाऽइति दिशु
नयेद्यदक्रन्दऽइतिरथं वाहयेत्तदेवमाविद्ध्वाविध्य श-
त्रूणां चालनमेव युध्यमानेऽपराजितो भवति शक्ते-
णापि युध्येत् ॥ ६ ॥ यमेन दत्तमित्यश्वानभिमन्त्रयेच्छ्रा-
न्तान्पुनस्तोणितऽइत्यश्वग्रन्थीन्मोचयेन्महाँ २ऽ ॥ इन्द्रऽ-
इत्यासनमिन्द्रो हत्रमिति रथं कुतस्त्वमिति योधात्सह-
सामभिभाषयेत्तान्प्रतिजपेत्सुसमिद्धायेत्याहवनीये स-
मिधमादधाति न तद्रक्षांऽसीत्याज्याहुतीनामयुतं जु-

हुयात् क्षत्रियाणां क्षत्रायाय गतायुरपि दीर्घायुर्भवति
शं नो देवीरित्युपस्थाय प्रविशेद्वेषा रणदीक्षा ब्राह्म-
णोऽपि प्राणसंशये शस्त्रमाददीत यमेन दत्तमित्यश्वं
सकृदाज्याहुतीनामयुतं जुहुयाच्चतुरश्वयुक्तं रथं
लभतेऽसियम इति मधुतिलाञ्जुहुयाद्देवमनुलेपना-
दिभिरर्चयेद्विद्वपापो भवति ब्रह्मघ्नमपि लक्षहोमेन
तारयेत्समिद्धोऽग्नय इति होमकाले देवतानामाह्वान-
मग्नये गायत्रायेति सार्वकामिकं चरुं कुर्यात् ॥ ७ ॥
विश्वानि देवेति महाव्याहृतिवदादित्यमुदयउपति-
ष्ठेद्विपापो भवत्युदकसक्तुाहारो मासमेकमन्वहं स-
हस्रं जपेद्ब्रह्महत्यादेरपि मुच्यते विभक्तारमिति सप्त-
म्यां कुशपुष्पमालां कृत्वौदुम्बरसमिधो यावच्छुष्यति ता-
वत्पुष्पमालायाद्रकेशस्य साहस्रिकं कर्म महानर्घो जायते
गोशफेना उचाहुतिहोमो गोकामाय मध्याह्नेऽन्न-
पिण्डं तद्धस्ताभिमन्त्रितं निवेदयेदक्षय्यमन्नं खादने वुभु-
क्षित आदित्याभिमुखो जपेत्सर्वतो भोजनं लभते ॥ ८ ॥
सहस्रशीर्षेति महाव्याहृतिवद्देदाहमित्यासु प्रविश्या-
होरात्रं जपेदामध्याह्नाद्वर्षति यो देवेभ्यइति रु-
चमिति रोचनास्न्या महाव्याहृतिवच्छ्रीश्चेति कुमुद-
सौगन्धिकोत्पलान्युप्य हुत्वा श्रीमान्भवत्युत्तरनाराय-
णेनादित्योपस्थानं कामं नामग्रहणं च यथेष्टं कामं

सर्वत्र सिद्धं कर्म सहस्रसंमितमिति चन्द्रग्रहे निराहारो वचां ब्राह्मीं वा सहस्राभिमन्त्रितां पिबेत्परममेधावी स्याद्यांश्चैवामिति जपेदिदं म इति च श्रीकामो नित्यम् ॥ ९ ॥ अस्याजरास इत्यग्निमुपतिष्ठेद्वरदो भवति तेजस्वीत्र द्वयोर्महाव्याहृतिवत् त्रीणि शताऽग्ने-श्रद्धेति त्रिमधुरैः सौभाग्यं प्रवो महे इति भूमिकामस्तिलतण्डुलैरिन्द्रो वृत्रमित्यत्र पुष्ट्या आयुष आज्यमाज्य इत्यौदुम्बरीभिर्धनकामो विभ्राडित्यनुवाकं सततं जपेत्प्रजाकामस्तेजस्वी निरुजस्थान इडाभिरित्यौदुम्बरीभिः पशुकामो यद्द्येति वासकादिभिर्वशीकरणं तिलकेन तत्सूर्यस्येति चक्षुष्मान्भवति वरामहानिति महाव्याहृतिवच्छायन इवेति तिलान्पुष्पाणि वा हुत्वा वास्तुपे शतपुष्पीं वा सुभगः स्यात् ॥ १० ॥ आकृष्णेनेति महाव्याहृतिवत्कर्म करवीरपुष्पाणि १००००० हुत्वा तप्त सुवर्णं लभेदर्दिद्रश्चेन्द्रवायू इन्द्राग्नी मित्रावरुणेति देवतास्थानं सिद्धये ऽग्न इन्द्राग्नी रुद्रा इति वारुण्यां गच्छेच्चेमं भवत्यवीच इति घृतेन सर्वभयनाशनं मित्रं हव इति घृतं हुत्वा शिष्टं पिबन्मेधावी स्याददब्धेभिरिति लाजाभिर्हिरण्यं गाव उपेति दधिमधुघृतैः पशुपुत्रसमृद्धिकाम उपनोऽनुत्तमेति चेमा उ त्वेति पावका-

य प्रतिक्रमीस्याजरासऽइत्यध्यायेन सर्वदेवताराधनं कुर्यात्प्रतिदिनं काममेकैकं लभतेऽध्ययनेन मासात् ॥ ११ ॥ यज्जाग्रतः षड्भिः शिवसङ्कल्पेन मानससमाधिः पितुन्न्विति शत्रुनामग्राह्याभिचाराणि जुहुयात्कर्म षट्कं सिद्ध्येन्न्नियते पञ्च नद्यऽइति पञ्चपुष्पाणि रक्तचन्दनघृताक्तानि लक्षं हुत्वा साक्षात्पद्ममालिनीं पश्यति यावज्जीवं धनं प्रयच्छतीष्टसन्ततिं च सिनीवालीति प्रजाकामोऽन्नं जुहुयात्प्रन्यदित्यायुष्ये वटारोहौदुम्बरदूर्वाश्च त्वम्नऽइति पुत्रपशुरक्षार्थमाज्यं जुहुयादुत्तानामवेति सद्योजातमात्रवत्सावलीढाभां वा जिह्वां उपस्पृशेद्भावऽश्चत्वयया भवन्ति । इडायास्त्वेति गोशर्करनाज्याहुतिसहस्रं जुहुयाद्धेनुशतंल्लभते । त्वमग्ने प्रथमऽइति नित्यमग्निं स्तुनुयात्सर्वसमृद्धो भवति प्रवो महेऽइति षड्चेन पितृनर्चयेत्प्रजाकामऽश्चाहुतिसहस्रं जुहुयात्गोशतं लभते देवेनेति यद्वनमिच्छेत्तावन्ति सव्रीहीञ्जुहुयात्प्रभुत्वं लभते सोभो धेनुमिति सोमचन्द्रग्रहेऽनुदितमुपतिष्ठेत्तन्मासे क्षेममौदुम्बरीभिर्हुत्वा हिरण्यप्राप्तिः स्यादष्टौ वीति महाव्याहृति षड्हिरण्यपाणिरिति चाभिचारवर्ज्जमादित्योपस्थानर्ठ० हिरण्यहस्तऽइति सर्षपानभिमन्त्र्य रक्षार्थौ भवति

ये ते पन्था: क्षेमेण गच्छति क्षेमकारिण्युभा पिबतमि-
ति रूपकामोऽश्विनौ स्तुयादुषस्तदिति प्रातर्दिवा
स्वस्त्ययनमनाद्यं च पुत्रार्थी द्रव्यहोमस्तदर्थं महाव्याहृ-
तिवत्प्रातर्जितमिति च यदा बध्नन्निति हिरण्यठं॰ स-
स्वाभिमन्त्रितं दक्षिणहस्ते बध्नीयात्सर्वेषां पापचक्षुषां
दृष्टिदोषमपोहति न च राजाविरुद्धमाचरेत्प्रियदर्शनो
भवति ॥ १२ ॥ इति यजुर्विधाने पञ्चमोऽध्याय: ॥ ५ ॥
परं मृत्यविति बालानां गुर्विणीनाᳪ हस्ते सूत्रबन्धो भू-
तप्रेतादि नाशयति जपहोमौ च प्रौढगर्भे गर्भस्रावे
वन्ध्यात्वे च मृतवत्साम्तौ माठंसपललापूपशाकुलि-
कारण्यमांसपयोदधिमधुघृताक्तमन्नं निवेद्य सर्वका-
मिकमन्नठं॰ भुक्त्वा शेषभुग्जपत्वा मैथुनमुपेयाद्गर्भ-
स्तिष्ठति प्रथमे पतिते आवाहनं द्वितीये पोषणं तृ-
तीये तर्पणं पञ्चमे गर्भस्तिष्ठेदमोघं कर्मापामार्गमित्य-
पामार्गहोम: सर्वदुरितदु:स्वप्ननाशनऽआयुष्मानित्या-
ज्यमायुषे रक्षायाऽइमं जीवेभ्यऽइति सीतालोष्ट-
ठं॰ सहस्राभिमन्त्रितं चतुर्दिक्षु क्षिपेद्दुष्टभयं न
स्यात्परीमऽइति शिखाबन्धो मंडलबन्धश्चात्मरक्षार्थाय
वशीकरणे तुषहोमो महाभये जपेदभयं भवति रा-
जानमीक्ष्य जपेद्वश्यो भवति हन्तुमागच्छन्तं दृष्ट्वा ज-
पेत्प्रणमति भक्ष्यपुष्पफलादीनि दद्याद्वश्यार्थे च स्योना

पृथिवीति महाव्याहृतिवत्कर्म्म ॥ १ ॥ ऋचं वाचमि-
तीन्द्रियविकलो जपेत्पूर्णेन्द्रियो भवति यन्मऽइति-
कर्मसमाप्तौ दोषपरिहारार्थञ्जपेत् इन्द्रो विश्वस्येति
द्विपदचतुष्पदां शान्तिः क्षीरहोमाच्छान्तिर्भवति शन्नो
मित्रऽइति जनमरणे चोपसर्गाभिचारेषु ज्वरादिरो-
गे स्वाध्यायसमाप्तौ व्रीहिहोमः शान्त्ये विषमग्रहे त
त्समिद्धोमः द्यौः शान्तिरित्यभिचारवर्ज्जं सर्वकर्मसि-
द्धिर्यतो यतऽइति जपेदभयकारिणीं सुमित्रिया
नऽइतिजलमञ्जलिनादाय दुर्मित्रियाऽइति द्वेष्यं प्रति-
निक्षिपेत्तमुत्सादयति तच्चक्षुरिति जपेदारोग्याय
पुष्ट्यै ॥ १२ ॥ यमाय त्वा जपेदन्वहं० सर्वसम्पद्भो
विदितश्च स्यात् ॥ २ ॥ अनाधृष्टेति पञ्चचतुर्भिः
पयोदधिघृतमधुतिलैर्जुहुयाद्गणासङ्ख्यमायुः प्रजापु-
ष्टिधनतेजस्कामो विश्व्यऽइति निमित्ते जपेद्भर्त्ता दिव-
ऽइति बुद्धिभ्रंशनाशनी हृदे त्वेति मतो ग्लानौ क
र्मसम्वृद्धिः पिता नऽइतिमहाव्याहृतिवत् ॥ ३ ॥ इड-
ऽएहीति यामेव धेनुमिच्छेत्तस्या नाम परिजप्य गोस्वा-
मीति शब्दं वदेत्तस्यैवापतति गोमयेन गोः प्रति-
कृतिं कृत्वा तन्नाम्ना बध्वा सव्येन गृहीत्वा पयोद-
धिमधुघृतं जुहुयात्तामेव धेनुं लभते यस्ते स्तनऽइति
सर्वकर्माणि सिद्ध्यन्ति स्वाहा सूर्यस्येति दृष्टिकामः

पयो जुहुयात्सद्यो वर्षति समुद्रायेति वातनामानि जपेद्वातो वाति द्विविधाऽइति दधिसहस्रं हुत्वा- सविता प्रसीदति व्रीह्यादिभिः पुष्टिर्गोर्वैर्द्विर्वे- तमगुडक्षीरैस्तैलाक्ताभिः सहस्रं जुहुयात्स्वाहा रुद्रायेति रहस्यो मन्त्रः गवेधुकतण्डुलान्जुहुयाद्धन- कामः ॥ ४ ॥ स्वाहा प्राणेभ्यऽइति महाव्याहृतिव- त्कर्म तं ग्रामे कुर्यान्मनसः काममिति श्रीनाम्ना सर्वा- भ्युदयसिद्धः फलति गोघृतेनाज्यहो १००० मेन गो- लाभो गोमयहोमेन सिद्धिरुग्रश्चेति विमुखाख्यो मन्त्रः सर्वकामप्रदो गोपशुमरणे गोष्टे वैकङ् १०००० कतो- र्हुत्वा शान्तिः रुग्रंलोहितेनेत्येकादशयजुर्भिर्द्रव्यका- मवर्ज्जं महाव्याहृतिवत्प्रतिदिनमेकादशसहस्रप्रतिम- न्त्रं निर्वपेदेकादशैव धेनवऽउत्पद्यन्तऽएवमन्येष्वपि कामेषु हुत्वाऽध्यायशेषेणादित्यमुपतिष्ठेतेनास्य क- र्मणां फलमाप्नोत्यग्नेनयेति नमस्कारोक्तिरग्निस्तुति- रात्मनो वा कर्मसमाप्तौ समाधौ च हिरण्मयेनादि- त्योपस्थानमोमित्येकाक्षरस्य परब्रह्मणो नामधेयं वेदो- पक्रमे समाप्तौ च जपहोमादिषु शान्तिपुष्टिकर्म चै- तत्प्रयुज्यतऽएतद्विदित्वा सर्वविद्भवत्येतदुपास्य रवि- सिद्धिभाग्भवति कल्याणतरो भवत्येतत्कर्मफलप्रति- पादकं पूर्वकर्मफलाभावादभावक्षतस्य कर्मणः स वेद-

फलयुक्तस्य कर्मणो नास्ति नैव फलमिति तच्छ्रुत्यपेक्षया ऽमुष्मिंल्लोके कृतस्य कर्मणः फलठ्ं हि संपत्तिः प्रत्ययं च न च विद्याधरपादप्रसारितधनानां जनपूर्ववर्णारसेषु नास्ति यज्ञविरोधित्वादित्यनेनैव प्रकारेण सर्वे मन्त्राः प्रकीर्तिता ये नोक्तास्ते च सर्वे यथास्करा ऽथवा सर्वमन्त्राणां विस्तरेण पृथग्विधानं विस्तरेण पृथग्विधानमिति ॥ ५ ॥ इति श्रीयजुर्वेदवाजसनेयसंहितायजुर्विधाने षष्ठोऽध्यायः ॥ ६ ॥ समाप्तोऽयम् ॥

---

# अथ स्वराष्टकशिक्षा ॥

---

ओ३हरिः ॥ ओम्साम्ब ॥ अऽइऽउऽऋऽऌऽएऽऐऽओऽऔ-
ऽइत्यष्टौ स्वराः ॥ पदान्तपदाद्योः सन्धिः ॥ पदान्तप-
दाद्योर्य्यऽएकः प्राणयोगः स सन्धिसञ्ज्ञः स्यात् ॥ न प-
रकालः पूर्व्वकाले ॥ पुनः पूर्वकालसन्धिः विधाने पर-
कालसन्धिं न प्राप्नोति ॥ एकम् ॥ १ ॥ अऽआमपरे ॥
तव अयम् ॥ तवायम् ॥ २ ॥ एकारमिवर्णे ॥ त-
व इदम् ॥ तवेदम् ॥ ३ ॥ ओकारमुवर्णे ॥ तवऽउरू-
स्तवोरूः । ४ ॥ आऽऋकारे ॥ स्वाहाऽऋषभम् ॥
स्वाहऽऋषभम् ॥ ५ ॥ ऐकारमे ऐपरत्वे ॥ तवऽएत-
त् ॥ तवैतत् ॥ तवऽऐश्वर्य्यम् ॥ तवैश्वर्य्यम् ॥ ६ ॥
औकारमोऽऔपरत्वे ॥ तवऽओजः ॥ तवौजः ॥ प्रऽ
औचन् ॥ प्रौचन् ॥ ७ ॥ इर्य्यं स्वरे ॥ वाजीऽअ-
र्वन् ॥ वाज्यर्वन् ॥ विऽऊर्णुषे ॥ व्यूर्णुषे ॥ अ-
सिऽऋतस्य ॥ अस्यतस्य ॥ ८ ॥ इरिमिवर्णे ॥ विऽइत ॥
वीत ॥ ९ ॥ उर्व्वं स्वरे ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ १० ॥
उरमुवर्णे ॥ अनुऽउत् ॥ अनूत् ॥ ११ ॥ ऋकारो रे
फं स्वरे ॥ धातृऽअंशः ॥ धात्रंशः ॥ १२ ॥

ऋवर्णे ऽऌकारऋवर्णे ॥ होतृऽऌकारः ॥ होतॄका-
रः ॥ १३ ॥ एकारोऽयवः स्वरे ॥ ॥ अग्ने ऽ
आयाहि ॥ अग्नऽआयाहि ॥ १४ ॥ ओकारो ऽव-
ः स्वरे ॥ विष्णोऽएते ॥ विष्णवेते ॥ १५ ॥ ऐरावः
स्वरे ॥ भूम्यैऽआखन् ॥ भूम्याऽआखून् ॥ १६ ॥ औ-
रावः स्वरे । उभौऽइन्द्रौ ॥ उभाविन्द्रौ ॥ १७ ॥ ओपरा-
कारा लोपम् ॥ अदृश्रायोऽअगीतम ॥ अदृश्राये ऽगीत-
म ॥ १८ ॥ तत्राद्यन्तलक्षणम् ॥ एपराकारो लोपम् ॥ तेऽअव-
न्तु ॥ तेवन्तु ॥ १९ ॥ वो लोपः सुऽओऔषु । उभौऽउ ॥
उभाऽउ ॥ उऽओऽऔष्विति किम् ॥ पर्ल्क्यावहोरा-
त्रे । २ । इत्यनन्तकृताच्सन्धिः ॥ अथ स्वरप्रकरणम् ॥
उदात्तानुदात्तस्वरितप्रचयाः स्वराः ॥ १ ॥ अतास्त्र-
उदात्त ॥ २ ॥ यथा ॥ ग्राम् ॥ प्र ॥ नु ॥ द्वितीयस्य
यथा ॥ अधो रक्तोऽनुदात्तः ॥ रुद्रऽईड ॥ ३ ॥ तृती-
यस्य च यथा ॥ उर्ध्वं रक्तस्तिर्य्यग्रक्तो वा स्वरितः ॥
स्वः ॥ स्वः ॥ स्वः ॥ ४ ॥ न्यग्जपराऽअतास्त्राऽउदा-
त्ताः ॥ स्वाहा ॥ स्वर्णार्कः ॥ ५ ॥ चतुर्थस्य च यथा ॥
स्वरितपराऽअतास्त्रः प्रचयाः । त्र्यम्बकँयजामहे । ६ ।
स्वरितः पञ्चधा ॥ जात्याभिनिहितक्षैप्रप्रश्लि-
ष्टभेदात् ॥ एकपदे नीचपर्व्वेऽसर्व्वो वा यत्रा-

न्यतरयुक्तो जात्यः ॥ धान्यम् । स्वः ॥ ७ ॥ उदात्तादे-
र्धिरचोऽभिनिहितस्वरितो भवत्यकारलोपे सति ॥ ते-
ऽवन्तु । तेऽवन्तु ॥ वेदः असि ॥ वेदोसि ॥ ८ ॥ उदात्त-
ऽइऽउस्थाने यवयोः परोऽनुदात्तः क्षैप्रः ॥ युयोध्यस्म-
त् ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ ९ ॥ उदात्तानुदात्तयोर्ह्रस्व-
योः स्थानेऽइकारः प्रश्लिष्टः ॥ विऽइत ॥ वीत ॥ १० ॥
अनुदात्तपूर्वजात्यादयश्चत्वारः पिपीलिकावद्धस्तम् ॥
वायव्यैः ॥ भुवः स्वः । तेऽवन्तु ॥ वेदोऽसि ॥ अ-
भ्यभि ॥ योजान्विन्द्र ॥ दिवीव ॥ ११ ॥ अनुदात्तपू-
र्वजात्यादयश्चत्वारो मनुष्यदानवद्धस्तम् ॥ भूर्भु-
वः स्वर्द्यौः ॥ सहस्रमिति ॥ रुद्रेभ्यो येन्तरिक्षे ॥ स्त-
मोस्मूर्णम् ॥ युयोध्यस्मत् ॥ अप्स्वन्तः ॥ दिवीवेति ॥ १२ ॥
अनुदात्तऽउदात्तस्वरितयोः ॥ येभि ॥ स्वर्ण येऽभि ॥ सोऽ
हम् । यो॒ऽन्तरिक्षम् । वीदम् ॥ स्वस्तभितए स्तभितए
स्वः स्वस्तभितम् ॥ १३ ॥ अननुदात्तपूर्वजात्यादयश्चत्वा-
रः कम्पमूले ऽउदात्तस्वरितपरत्वाऽभावे ॥ न्यङ् ॥ स्वः ॥
तेऽवन्तु ॥ सोऽस्मि ॥ त्र्यम्बकम् ॥ न्विन्द्र ॥ वीत ॥
१४ ॥ उदात्तात्परानुदात्तः स्वरितम् ॥ इषे त्वा ॥
१५ ॥ नोदात्तस्वरितपरत्वे ॥ इषे त्वोर्ज्जे ॥ इषा त्वा-
स्थम् ॥ स्वरितादनुदात्तानां प्रचयः ॥ वायवस्थ ॥ १६ ॥

नोदात्तस्वरितपरत्वे ॥ व्यायवस्य देव: ॥ व्यास्यमिद-
म् ॥ १७ ॥ उदात्तवानेको ह्युदात्त: ॥ प्रऽअर्पयतु ॥
प्रार्प्पयतु ॥ १८ ॥ उदात्तान्निहितस्त्वार: स्वरितात्प्र-
चयो भवेत् ॥ उदात्तात्स्वरितात्पूर्वो नान्यऽआपद्यते-
स्वर: । इति स्वराङ्कुश: ॥ कुचैलिनं दन्तमलापधा-
रिणम्बह्वाशनन्निष्ठुरवाक्यभाषिणम् ॥ सूर्य्योदये चा-
स्तमये च शायिनञ्जहाति लक्ष्मीरपि चक्रधारिणम् ॥
अथ हस्तप्रक्षेपलक्षणम् ॥ अनुदात्तो हृदि ज्ञे-
यो मूर्द्ध्न्युदात्तऽउदाहृत: ॥ स्वरित: कर्णमूले स्या-
न्नासाग्रे प्रचयस्मृत: ॥ ३ ॥ इषे त्वा ॥ व्यायव स्थ ॥
उदात्तादनुदात्ते तु वामाया भुवऽआरभेत् ॥ इषे
त्वोर्जे ॥ उदात्तात्स्वरिते चैव क्रमाद्दक्षिणतो न्यसे-
त् ॥ ४ ॥ इषे त्वा ॥ इत्यनन्तकृतं स्वराष्टकम् ॥ २ ॥
कटतपा गडदवानग्नि ॥ ऊर्क् ॥ असि ॥ ऊर्ग्गसि ॥
सम्म्राड्असि ॥ सम्म्राडसि ॥ उत्वयम् ॥ उद्वयम् ॥
त्रिष्टुप् इति ॥ त्रिष्टुबिति ॥ १ ॥ कटतपा ङणनमा: प-
ञ्चमे । वाक्मन: ॥ वाङ्मन: ॥ षट्महान् ॥ षण्म-
हान् ॥ तत् मित्रस्य ॥ तन्मित्रस्य ॥ अनुष्टुम्मात्या ॥
१ ॥ तदनाश्च जञा: शचवर्गयो: ॥ तत् चित्रम् ॥ त-
च्चित्रम् ॥ तत् जुषस्व ॥ तज्जुषस्व ॥ आदित्यानुष्म-

श्मभिः ॥ आदित्यास्त्रश्मिभिः ॥ ३ ॥ तो लँल्ले ॥ परिचित् । लोकम् ॥ परिचिल्लोकम् ॥ ४ ॥ अनुनासिकलँल्ल ॥ तान्लोकान् ॥ ताँल्लोकान् ॥ ५ ॥ ह्रस्वपरङ्नौ द्विर्भावं स्वरे ॥ दध्यङ् ऋषिः ॥ दध्यङ्ङृषिः ॥ अश्मन् । ऊर्जम् ॥ ६ ॥ नः शच्छयोः पूर्वस्यानुनासिकम् ॥ अह्नीन् च ॥ अह्नीँश्च ॥ ७ ॥ नः सन्तयोः पूर्वस्यानुनासिकम् । तान् । त्वम् । ताँस्त्वम् ॥ ८ ॥ मः परपञ्चमं स्पर्शे ॥ व्रतम् । करिष्यामि ॥ व्रतङ्करिष्यामि ॥ अयाम्केनेन ॥ ९ ॥ ङ्नौ काभ्यां सकारे ॥ ङ्नौ कागमतागमौ प्राप्नुतः सकारे ॥ प्राङ्सोमः ॥ प्राङ्क्सोमः ॥ चीन्समुद्रान् ॥ चीन्त्समुद्रान् ॥ १० ॥ मोऽनुनासिकयवलान्यवलेषु ॥ सम् । यौमि ॥ सँय्यौमि ॥ तम् व्वः ॥ तँव्वः ॥ तम् । लोकम् ॥ तँल्लोकम् ॥ ११ ॥ मः ऌकारऽ॰ शषसहरेफेषु ॥ सऽ॰शितम् ॥ ह्वीऌष्या ॥ सऽ॰ शिशाधि ॥ सऽ॰ सः ॥ अपाऌ रेताऌसि ॥ १२ ॥ झयः परः शश्छं ॥ तत् । शुक्रम् ॥ तच्छुक्रम् ॥ १३ ॥ झयः परो हः चतुर्थम् ॥ भिषक् । होमः ॥ भिषग्घोमः ॥ तत् । हविः ॥ तद्धविः ॥ सम्राट् होमः ॥ सम्राड् ढोमः ॥ १४ ॥ स्वरपरसँयोगादिर्द्विः ॥ इषे त्वा ॥ इष्ेत्त्वा ॥ १५ ॥ रहाभ्याम्प-

रः । सूर्य्यम् । वाह्यम् ॥ १६ ॥ स्पर्शोऽन्त्यान्तस्था-भ्यः ॥ व्वायवस्थ ॥ व्वायवस्त्थ ॥ १७ ॥ इत्यनन्तकृतो हलसन्धिः ॥ अपरविसर्गऽउऽअहशोः । शिवः । असि ॥ शिवोऽसि ॥ देवेभ्यः । हविः । देवेभ्यो हविः ॥ १ ॥ आपरो लोपमऽआपरत्वे । देवाः । अत्र । देवाऽअत्र । देवाःऽआशाः ॥ देवाऽआशाः ॥ २ ॥ अपरो लोपमा परत्वे ॥ देवाःऽआशाः । देवाऽआशाः ॥ ३ ॥ आपरो लोपठं हशि ॥ देवाः । हसन्ति ॥ देवा हसन्ति ॥ ४ ॥ अआपरो लोपमिचि ॥ देवाः । इह । देवाऽइह ॥ अघ्न्याः । इन्द्राय । अघ्न्याऽइन्द्राय ॥ ५ ॥ रेफतऽइच्यरस्य रेफमशि ॥ सवितः जजान ॥ सवितर्ज्जजान ॥ अग्निः एकाक्षरेण । अग्निरेकाक्षरेण ॥ ६ ॥ रेफजेच्यरौ लोपठं रेफे पूर्व्वस्य दीर्घम् ॥ प्रातः रात्रिः ॥ प्राता रात्रिः ॥ रुद्रः रौद्रः ॥ रुद्र रौद्रः ॥ ७ ॥ अमसऽएपविसर्गौ लोपठं व्यञ्जने ॥ एषः स्यः । एषस्यः ॥ स्यः राध्यः ॥ स्यराध्यः ॥ सः । नः ॥ सन्नः ॥ ८ ॥ सः ते । सत्ते ॥ नमः ते ॥ नमस्ते ॥ ९ ॥ चच्छपरत्वे शम् ॥ व्वाजः च ॥ व्वाजश्च ॥ १० ॥ लोपङ्खर्प्परे शरि ॥ अन्धः स्थ । अन्धस्त्थ ॥ ११ ॥ इतिविसर्गसन्धिः ॥ अऽइऽउण् ॥ १ ॥ ऋऌक् ॥ २ ॥

एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥ १२ ॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥ अङ्क्षीनं परेषा संयोज्यम् ॥ इति स्वराष्टकं संपूर्णम् ॥

---

# क्रमकारिकाशिक्षा ॥

---

श्रीगणेशाय नमः ॥

प्रणम्याद्यं दिनमणिं योगीश्वरशिरोमणिम् । सर्वज्ञं याज्ञवल्क्यं तच्छिष्यं कात्यायनम्मुनिम् ॥ १ ॥ सर्वं याजुषमन्त्राणां वेदे वाजसनेयके । क्रमावसानविषयां कारिकामारभामहे ॥ २ ॥ श्लोके विंद्वादिरहितः प्रतीकेषु न दुःसहः ॥ प्रत्येकम् प्रथमा षष्ठी सप्तम्युक्तश्च कल्पते ॥ ३ ॥ पदानामानुपूर्व्येण क्रमएषः प्रवर्तते । गणान्तानां क्रमो नास्ति इति कात्यायनोऽब्रवीत् ॥ ४ ॥ न वेष्ट्याश्च द्विवेष्ट्याश्च त्रिवेष्ट्याश्च तथा परे । चतुर्वेष्ट्यो मध्यवेष्ट्यः पञ्चवेष्ट्य इतीरितः ॥ ५ ॥ अवग्रहोऽनुवाकान्ते अर्द्धर्चान्ते ऋचां तथा ॥ यजुषां वाक्यावसानेष्विति साधारणो विधिः ॥ ६ ॥ प्रत्यक्षं याज्ञवल्क्यं श्रीशम्भुमिश्रविनिर्म्मिता ॥ क्रियतां क्रमितैः कण्ठैः कारिका रत्नमालिका ॥ ७ ॥ ह्रस्वपूर्वो ह्यनुस्वारो दीर्घानुस्वारभाग्भवेत् ॥ द्विशः परश्चेन्न तथा क्रमकाले तु वाजिनाम् ॥ ८ ॥ ओ३म् ॥ इषेत्वेत्ययमध्यायो ह्यनुवाकान्तवेष्टनः ॥ गायत्रेण त्रिवेष्ट्योऽत्र पुरा क्रूरत्रिवेष्टनः ॥ ९ ॥ देव स-

वितस्त्विष्टदृ्येकमेषा ते तु द्विवेष्टनः । एतन्ते दृ्येकता त्वग्नीषोमयोरनुवाकष्टत् ॥ १० ॥ अग्ने दब्धायऽएकत्व न्देवागातुविदे द्विष्टत् ॥ सम्बर्ह्यादिषट्कैकामुरु व्विष्णो द्विवेष्टनः ॥ ११ ॥ ततोऽसिद्वे त्रिचतुष्कैकं सँव्वर्त्तेति द्विवेष्टनः ॥ यज्ञसञ्ज्ञेत्येकतात्वेऽग्नये कव्येति न वेष्टनः ॥ १२ ॥ येरूद्विष्टन्नमो हैकमाद्यन्तोर्ज्जरूपोर्द्विष्टत् । समिधाद्यष्टसु द्विष्टदग्निज्र्योतिः षडेकता ॥ १३ ॥ इन्द्रः पञ्चादिवेष्ट्यः स्यात्समिदं पञ्चवेष्टनः ॥ उपप्रषट्स्वपि द्विवृत्तनूपात् सप्तकैकता ॥ १४ ॥ उपत्वा पञ्चसु द्विष्टदिडऽएह्यन्तवेष्टनः ॥ सोमानाद्यष्टसु द्विष्टत् परिते दूडभस्त्रिष्टत् ॥ १५ ॥ भूर्भुवः स्वोनुवाकैक्यं प्रघासीति द्विवेष्टनः ॥ यद्ग्रामेत्यन्तवेष्ट्यः स्यान्मो पूर्णेति द्वयोर्द्विवृत् ॥ १६ ॥ अवभृथेत्यन्तवेष्ट्यः पूर्णादर्व्यष्टसु द्विष्टत् ॥ एषतैका त्र्यम्बकयोर्द्वयेर्द्विष्टत्परोऽन्तष्टत् ॥ १७ ॥ वाजिनीत्वाजो द्विवेष्ट्यो वाज्यहम्पञ्चकैकता ॥ एदमादित्रिषु द्विष्टन्मह्रीनां युगलैकता ॥ १८ ॥ आपो द्विवेष्टनः स्वाहा यज्ञमित्यन्तवेष्टनः ॥ आकूत्यै प्रयुजे त्रिष्टद्विश्वो देवस्य तु द्विष्टत् ॥ १९ ॥ ऋक्सामयोश्चतुष्कैक्यं व्रतं कृणु सप्तैकता ॥ त्वमग्नेव्रतपाद्द्विष्टद्रास्वे पञ्चान्तवेष्टनः ॥ २० ॥ एषा ते पञ्चकैकत्वं वस्व्यादिश्चतुरैकता ॥ एष ते युगलैकत्वमभित्यन्तद्विवेष्टनः ॥

२१ ॥ प्रजाभ्यस्त्वाऽन्त इन्द्रम्प्रथमाद्वयोन्तवेष्टनः ॥ समग्नेऽर्ध्वं शुक्रान्तपसस्तन्वादिचतुरैकता ॥ २२ ॥ प्रतिपन्यान्द्विवेष्टयः स्यादुदित्यास्त्वक् द्विवेष्टनः ॥ व्रनेषु युगयोर्द्विष्टदुस्थावेतं युगैकता ॥ २३ ॥ नमो मित्रस्य तु द्विष्टद्वरुणस्य त्रिष्टत्परः ॥ अग्नेस्तनूर्युगैकत्वं भवतन्नो द्वयोर्द्विष्टत् ॥ २४ ॥ आपतयेत्वेन्द्रघोषस्त्वाऽनुवाकान्तवेष्टनः ॥ युञ्जतेति त्रिषु द्विष्टद्देवश्रुतयुगैकता ॥ २५ ॥ विष्णवादि त्रिषु द्विष्टद्विष्णोरराटमन्तष्टत् ॥ आददे पञ्चकैकत्वं यवोऽसि चतुरैकता ॥ २६ ॥ परित्वा गिर्वणो द्विष्टदिन्द्रस्य स्यूरथान्तष्टत् ॥ विभूरस्यानुवाकैक्यं ज्योतिर्व्वेष्टचतुष्कवान् ॥ २७ ॥ अग्ने नय द्वयोर्द्विष्टद्देवसवितस्त्वयैकता ॥ अत्यन्न्यान्वितयैकत्वमयं द्वित्वा द्विवेष्टनः ॥ २८ ॥ अग्रेणीरन्तष्टद्या ते त्रिषु द्विष्टत्परोऽन्तष्टत् ॥ उपावीरस्य मनस्ते यत्ते स्वेत्यनुवाकष्टत् ॥ २९ ॥ समुद्रादिचतुष्कैक्यमिदमापो द्वयोर्द्विष्टत् ॥ अग्नेर्व्वस्त्वन्तवेष्ट्यः स्यादमूर्य्यास्तु द्विवेष्टनः ॥ ३० ॥ हृदे त्वा युगलैकत्वं श्रुष्टीवग्निर्द्विवेष्टनः ॥ देवीरापस्त्वयैकत्वं यमग्ने पृत्सवति द्विष्टत् ॥ ३१ ॥ आददे सप्तकैकत्वं त्वमङ्गेति त्रिवेष्टनः ॥ वाचस्त्वैक्यं चोपयाम द्वैक्यमावाशो च द्विष्टत् ॥ ३२ ॥ इन्द्रवायू अयं वां च रायायावां त्रिवेष्टनः । तम्प्रत्नाद्यद्वयोर्द्विष्टत्त्वन्तशुक्रोषतेऽन्त-

ष्टत् ॥ ३३ ॥ अच्छिन्न स्य चतुर्ष्षु द्विष्टद्यं वेनस्त्वमध्यम: ॥ एष तेऽत्यन्तवेष्ट्य: स्याद्ये देवासो द्विवेष्टन: ॥ ३४ ॥ आग्नेयन्नैक्यमिन्द्राय द्वैक्यं मूर्द्धा द्विवेष्टन: ॥ उपाꣳशोरन्तवेष्ट्य: स्यादपो देवा द्विवेष्टन: ॥ ३५॥ इष्णाऽऊर्म्मिस्त्वयैकत्वं सविता त्वानुवाकष्टत् । सोमस्य त्विषिर्य्यमैक्यं सधमादो द्विवेष्टन: ॥ ३६ ॥ वनस्योत्व्यं त्र्यैक्यं अवेष्टाश्चतुष्कान्तवेष्टन: ॥ ऊर्द्ध्वामारोह चादार्द्ध वर्ज्जं विद्याद्द्विवेष्टन ॥३७॥ द्विष्टत्सोमस्य त्विषिर्हिरण्यरूपो त्रिवेष्टन: ॥ सोमस्य त्वाऽन्तवेष्ट्य: प्रपर्वतस्य त्रिवेष्टन: ॥ ३८ ॥ प्रजापतयेति द्विवेष्ट्यो रुद्र यत्त्वन्त वेष्टन: । इन्द्रस्य त्वान्तष्टन्मा ते द्विनृद्मनयऽअन्तष्टत् ॥ ३९ ॥ हꣳसो द्विष्टश्चेयदसि स्योनासि चान्तवेष्टन: । निषसाद द्विवेष्ट्योऽभिभूरादिचतुरैकता ॥ ४० ॥ सविता द्वैष्ट्यमश्विभ्यां युग्मं युग्मं त्रिष्टद्द्विष्टत् । युञ्जान: सप्तसु द्विष्टदाददे युगलैकता ॥ ४१ ॥ हस्तादिचतुर्ष्षु द्विनृत्यतूर्वं युगलैकता ॥ अन्वग्न्येकादशा नद्विष्टत्पृथिव्या: सधस्थास्त्रिष्टत् ॥ ४२ ॥ अपां पृष्ठन्द्वयोर्हि वृत्सँश्वसायाँ त्रिवेष्टन: ॥ त्वामग्ने पञ्चदशसु द्विष्टस्त्रिवृद्वृषाग्निते ॥ ४३ ॥ ओषध्येकादशानान्द्विष्टन्मखस्य शिरोन्तत: । कृत्वाय सा द्विवेष्ट्य: स्याद्वसवस्त्वाऽन्तवेष्टन: ॥ ४४ ॥ अदितिष्ट्वा युगैकत्वम्मित्रस्य युगलन्द्विष्टत् ॥ उत्थाय बृहतीति द्वावाकृतिन्वन्त-

वेष्टनः ॥ ४५ ॥ मा स्वादिषु च सर्व्वेषु द्विष्टदन्नपते त्रिवृ-
त् ॥ द्विवृद्दृष्टयानोऽध्यायाद्विसुपर्णा सि नवैकता ॥ ४६ ॥
चिदसीत्यन्तवृद्यन्ते सञ्ज्ञानञ्च त्रिवेष्टनम् ॥ द्विष्ट-
न्मयि ह्यनुवाको ध्रुवासि चतुरैकता ॥ ४६ ॥ काण्डा-
दिति चतुष्षु द्विवृद्विराड्ज्योतिस्त्रयैकता ॥ अषाढाद्या-
स्तथैकोनविंशतिस्तुर्द्विवेष्टनः ॥ ४८ ॥ इमस्मा स्यात्रिवृद्दे-
कशफं पशुमिति द्विवृत् ॥ सहस्रमूर्णायुमन्तो ह्यन्तव-
र्जं द्विवेष्टनः ॥ ४९ ॥ त्वं यविष्ठ द्विवेष्ट्यः स्यादपा न्वे-
त्यन्तवेष्टनः ॥ नवायं पुरो न वेष्ट्यो ह्यन्त्याध्यर्धं विना
द्विवृत् ॥ ५० ॥ ध्रुवक्षितिश्चतुर्ष्षु द्विवृद्दित्यास्त्वा त्रिवे
ष्टनः । सजूर्ब्दी वयश्चेति ह्यनुवाकान्तवेष्टनः ॥ ५१ ॥
इन्द्राग्नी स्याद्विवृद्विश्वकर्मा त्वा युगलैकता ॥ आद्य
मूर्द्धाऽसुरग्नेर्भागैकयेत्यनुवाकवृत् ॥ ५२ ॥ अग्ने जातां-
द्विवृत्त्रिवत्सहसाऽग्नेः पुरीषन्द्विवृत् । एवाद्विरश्मि-
ना राज्ञो चायम्पुरश्चानुवाकवृत् ॥ ५३ ॥ अग्निर्मूर्द्धाऽ
नुवाको द्विवेष्ट्योऽन्तान्तत्रिवेष्टनः । येन ऽऋषयोऽनुवाको
द्विवृत्पञ्चान्तवेष्टनः ॥ ५४ ॥ प्रोथद्विवृत्त्वन्तवर्जमाणे द्वि
द्विपरोऽन्तवृत् ॥ नमस्ते चानुवाकेषु सप्तस्वाद्यो द्विवेष्ट-
नः ॥ ५५ ॥ अनुवाकान्तवृत्पट्सु द्रापेअन्धाष्टसु द्विष्टत् ॥
दशास्मिन्महतीत्याद्याः सर्वे चैवान्तवेष्टनाः ॥ ५६ ॥ अ-
श्मन्नूर्ज्जं भिदन्द्विवृदिमा मेति त्रयैकता ॥ समुद्रसप्तसु

द्विवृन्नमस्ते हरसे त्रिवृत् ॥ ५७॥ ये देवादिषु च द्विवृद्राजुह्वानोऽन्तवेष्टनः । ताꣳ सवितुः पञ्चसु द्विवृत् शुक्रज्योत्यनुवाकवृत् ॥ ५८॥ द्विवृदिम ꣳस्तानुवाकाऽएताऽअर्थंति तत्त्रिवृत् ॥ वाजाद्योऽनुवाकाः स्युरनुवाकान्तवेष्टनाः ॥ ५९ ॥ द्विवृद्राजस्यानुवाकः पयः पृथिव्यान्तु त्रिवृत् ॥ ऋताष्टकैक्यं रुचन्नो द्वयोर्द्विवृत्परीतान्तवृत् ॥ ६० ॥ त्रिषु स्यऽग्निं युनज्म्यादिष्वनुवाकेषु च द्विवृत् । स्वाहोन्त्रिवृत्परीतो द्विर्व्यायोस्त्रि द्विः पुनाति ते ॥ ६१॥ त्रिब्रह्मजज्ञानाना द्विराद्यद्वर्न्तवृदाश्विनम् ॥ मोदाद्वयुक्तान्तेजोऽन्तवृद्या व्याघ्रादिषु द्विवृत् ॥ ६२॥ षड्विंशतिषु मन्त्रेषु स्यात्पितृभ्यः स्वधान्तवृत् ॥ अद्रनुद्वादशसु द्विवृदिमꣳ० हविरिति त्रिवृत् ॥ ६३ ॥ उदीरतादिषु द्विवृत् क्रमस्यैव तु वेष्टनम् । त्वया त्रिवेद्यः प्रथमा द्वयैक्यं लोमानि च द्विवृत् । ६४ ॥ सुदुद्रोर्यवऊर्जं व्यद्देवाध्यायः सर्वार्धवेष्टनः ॥ स च शूद्रैर्व्यमन्त्रः स्यादस्ययम्पिटपदे द्विवृत् ॥ ६५ ॥ इमम्मञ्चादिषु द्विवृद्धोता यज्ञत्सु चान्तवृत् । त्रिवृत्पूर्वाश्विनौ छागाद्यन्तवृत्तदनन्तरम् ॥ ६६ ॥ त्रिवृत्पराश्विनौ छागो वनस्पत्यग्निचान्तवृत् । देवम्बर्ह्यादिषु द्विवृद्देवो ह्यत्यंतवेष्टनः ॥ ६७ ॥ अग्निनद्यु च स्रुपस्या त्वामद्येति त्रयैकता ॥ तेजोन्तवृदिमाद्विवृदभिधा युगलैकता ॥ ६८ ॥ नद्विवृद्यो अर्वा-

न्नये ऽन्तवृद्विङ्कारानुवाकवृत् ॥ हिरण्यपाण्यादिन-
वाजीजनस्य द्विवेष्टनः ॥ ६९ ॥ कायादयोऽनुवाकस्यानु-
वाका ह्यन्तवेष्टनः ॥ हिरण्यगर्भेत्यध्याये प्रजापतयऽअन्त-
वृत् ॥ ७० ॥ यः प्राणतो द्विवृच्चन्द्रमास्तदत्यन्तवेष्टनः ॥
युञ्जन्तीति त्रिषु द्विवृद्वसवो युगलैकता ॥ ७१ ॥ स्विच्चतुर्षु
वायुद्वा पञ्चसु स्याद्द्विवेष्टनः ॥ अग्निः पशुरमीष्य-
वर्ज्जन्द्विवृद्वास्वयैकता ॥ ७२ ॥ उत्सक्थ्याद्यनुवाकेषु
पञ्चसु स्याद्द्विवेष्टनः ॥ अम्बस्त्वारभ्य चत्वारः सोमा-
द्यर्थांतमेकता ॥ ७३ ॥ रोहितादूर्द्धसमायुक्तः शितिर-
न्ध्रोऽन्तवेष्टनः ॥ शुद्धवालस्य प्रभृत्यवदित्याद्यन्तमेकता ॥
७४ ॥ वृद्वयुक्तफलग्वादि द्वैक्यं शिल्पास्तथान्तवृत् ॥ स-
प्तमूर्द्धानुवाकेषु मन्त्राणामन्तवेष्टनम् ॥ ७५ ॥ शादं चैवा-
नुवाकानान्नवकं चानुवाकवृत् ॥ पञ्चमूर्द्धानुवाकेषु
द्विवृदिमा नु कं त्रिवृत् ॥ ७६ ॥ अग्निश्चेति त्रिवृद्द्विवृद-
न्तरेषु त्रिषु त्रिवृत् ॥ वैश्वानरं चैव विद्यादग्नि-
रुक्थेन चान्तवृत् ॥ ७७ ॥ वैश्वानरस्य सुमतावादयः ष-
ड्द्विवेष्टनः ॥ द्विवृत्समास्त्वेत्यऽध्याय स्वापश्चिदन्त्यवेष्टनः ॥
७८ ॥ सँव्वत्सरोऽसि द्विवृदित्यन्वाकोऽनुवाकवृत् ॥ होता
यक्षदेकादशपूर्वश्चैवापरो द्विवृत् ॥ ७९ ॥ देवं बर्हिरप-
रो द्विवच्छुचिमुष्णिग्घमात्रिका ॥ ऊर्ध्वंतोऽर्द्धगणांतेषु त-
त्तन्मन्त्राशतान्तवृत् ॥ ८० ॥ द्विवेष्टमिन्द्राय व्ययोधसऽइ-

त्यन्तयोर्द्वयोः ॥ समिद्धोऽअञ्जन्नध्याये मन्त्राःसर्वे द्विवेष्टनाः॥ ८१ ॥ अन्त्यानामनुवाकानां त्रयाणामनुवाकवृत् । द्विवृद्द्वाजराध्यायौ ब्रह्मन् निदिति चान्तवृत् ॥ ८२ ॥ द्विवृद्यज्ञाग्रतोऽध्यायो द्युभिरक्तुभिरन्तवृत् । विश्वानि च विभक्तारं द्विवृदन्ये तु वेष्टनाः ॥ ८३ ॥ सहस्रशीर्षामन्त्रेषु चतुर्विंशतिषु द्विवृत् । न तस्य त्रिवृद्देषो ह येनद्यौर्दशस्तु द्विवृत्॥ ८४ ॥ त्रिवृद्द्युभिरहोभिस्तु द्विवृद्वायुः पुनाति च । सविता त्रिवृदन्येद्विवृत्स्योना पृथिवी त्रिवृत् ॥ ८५ ॥ ऋचंवाचन्त्रिवृदान्तोऽन्ताद्वैवऊर्जं द्विवेष्टनः ॥ ऊतिभिः सहितः कया त्वमादिचतुष्षु द्विष्टत् ॥ ८६ ॥ अहानिशन्त्रिष्टद्देवीरभिष्टयऽइति द्विष्टत् ॥ द्यौः शान्तिरन्तवेष्ट्यः स्याद्दृते दृꣳह त्रिवेष्टनः ॥ ८७ ॥ ज्योक्तेऽन्नष्टन्नमस्तेऽस्तु यतस्तच्चक्षुस्य द्विष्टत् । आददे देविदेव्यश्चेतीन्द्रैक्यं प्रैत्विति द्विष्टत् ॥ ८८ ॥ मखस्यास्वस्य नवै क्यं यमाय त्रितयैकता ॥ द्विष्टत्गर्भोऽनुवाकस्तु विश्वासान्त्यं विनात्रिवृत् ॥ ८९ ॥ आददेचतुष्कैकं यस्ते द्विवृत्परोऽन्तवृत् । समुद्राय तद्द्वित्रैक्यं यमायेति द्विवेष्टनः ॥ ९० ॥ विश्वाऽआशाः पञ्चकैक्यं स्वाहा पूष्णोऽनुवाकवृत्॥ अभीमन्तु द्विवृद्याते चतुष्कैक्यम्त्रिद्विवृत् ॥९१॥ यावतीत्यनुवाकैश्चन्त्विषः सँवृगथान्तवृत् ॥ स्वाहा प्राणानुवाकानामष्टानामनुवाकवृत् ॥ ९२ ॥ आ-

यासाय युगैकत्वं यमायेत्यन्तवेष्टनः ॥ ८२ ॥ ईशावास्य-
मिदं सर्व्वं द्विवेद्यं सर्व्वसम्मतम् ॥ ४ ॥ इति क्रमकारि-
का शिक्षा समाप्ता ॥

---

# पाणिनीयशिक्षा ॥

श्रीगणेशायनमः ॥

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ॥ शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ॥ पुनर्व्यक्ती करिष्यामि वाचऽउच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते (१)मताः ॥ प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥ यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥ अनुस्वारो विसर्गश्च ᳵकᳶपौ चापि पराश्रितौ ॥ दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ १ ॥ आत्मा बुद्ध्या (२)समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ प्रातःऽसवनयोगं तच्छन्दो गायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुग-

---

(१) सम्भवतो मतः । इति "क" पुस्तकपाठः ।

(२) समेत्यार्थान् (२) इति "ख" पुस्तकपाठः ॥

म् ॥ तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥८॥ सो-
दीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥ वर्णाञ्जनय-
ते तेषां विभागः पञ्चधा स्मृतः ॥९॥ स्वरतः कालतः
स्थानात्प्रयत्नानुप्रदानतः ॥ इति वर्णविदः प्राहुर्निपु-
णं तं निबोधत ॥ १० ॥ २ ॥ उदात्तश्चानुदात्तश्च स्वरित-
श्च स्वरास्त्रयः ॥ ह्रस्वो दीर्घः प्लुतइति कालतो नियमा-
ऽचि ॥ ११ ॥ उदात्ते निषादगान्धारावनुदात्त ऋषभ-
धैवतौ ॥ स्वरितप्रभवा ह्येते षड्मध्यमपञ्चमाः ॥१२॥
अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ॥ जिह्वामू-
लं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥ ओभावश्च
विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च ग-
तिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसन्धानमुकारादि प-
रं पदम् ॥ स्वरांतं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ ॥ ३ ॥
हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ॥ औरस्यं तं वि-
जानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कंठ्यावहाविचुयशा-
स्तालव्या ओष्ठजावुपू ॥ स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतु-
लसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दंत्योष्ठ्यो
वः स्मृतो बुधैः ॥ एऐ तु कंठतालव्या ओऔ कण्ठोष्ठजौ
स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्यस्य एकारैकारयोर्भ-

वेत् ॥ ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ॥ घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥२०॥४॥ स्वराणामूष्मणां चैवविवृतं करणं स्मृतम् ॥ तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥२१॥ अनुस्वारयमाणां च नासिकास्थानमुच्यते ॥ अयोगवाहा विज्ञेयाऽआश्रयस्थानभागिनः ॥ २२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानुगः ॥ अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥२३॥ अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ॥ द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरेत्पुत्रां दंष्ट्राभ्यां न च पीडयेत् ॥ भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥२५॥५॥ यथा सौराष्ट्रिका नारी तक्राँऽइत्यभिभाषते॥ एवं रङ्गाः प्रयोक्तव्याः खेअराँ इव खेदया ॥२६॥ रङ्गवर्णं प्रयुञ्जीरन्नोग्रसेत्पूर्वमक्षरम् ॥ दीर्घस्वरं प्रयुंजीयात्पश्चान्नासिक्यमाचरेत् ॥२७॥ हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि॥नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् ॥ मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥२९॥ मध्ये तु कंपयेत्कंपमुभौ पार्श्वौ समौ भवेत् ॥ स रंगं कंपयेत्कंपं रथीवेति निदर्शनम् ॥ ३० ॥ एवं

वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताऽः ॥ सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥३१॥६॥ गीती शीघ्री शिरः कंपी तथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकंठश्च षडेते पाठकाधमाऽः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरऽः ॥ धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितम्भीतमुद्घुष्टमव्यक्तमनुनासिकम् ॥ काकस्वरं शिरसि गन्तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तम्विलम्बितङ्गद्गदितं प्रगीतम् ॥ निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ॥ मध्यंदिने कण्ठगतेन चैव चक्राह्वसङ्कूजितसंनिभेन ॥ ३६ ॥ तारन्तु विद्यात्सवनं तृतीयं शिरोगतन्तच्च सदा प्रयोज्यम् ॥ मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥३७॥७॥ अचोऽस्पृष्टायणस्त्वीषंनेमिस्पृष्टाःशरः स्मृताः ॥ शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतऽः ॥ ३८ ॥ यमोऽनुनासिकानह्नोनादिनो हझषः स्मृताः ॥ ईषन्नादा यणजशश्वासिनस्तु खफादयऽः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते ॥ दाक्षीपुत्रऽः पाणिनिना येनेदं व्यापितम्भु-

वि ॥४०॥७॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ॥ ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥ तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ ४२ ॥८॥ उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ॥ उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥४३॥ उदात्तप्रदेशिनीं विद्यात्प्रचयं मध्यतोंऽगुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥४४ ॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ॥ मध्योदात्तं स्वरितं द्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सोम प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिंद्राबृहस्पती ॥ अग्निरित्यन्तोदात्तं सोमइत्याद्युदात्तं प्रेत्युदात्तं वइत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् ॥ बृहस्पतिरिति द्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम्॥४७॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्तउदाहृतः ॥ स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥४८॥९॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः(१) ॥ शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥४९॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ॥ न त-

(१) द्विमात्रं वायसोऽब्रवीत् इति "ख" पुस्तकपाठः ॥

स्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम् ॥ सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अवक्षरं ह्यनायुष्यं विस्वरं व्याधिपीडितम् ॥ अक्षता शस्त्ररूपेण वज्रं पतन्ति मस्तके ॥ ५३ ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसामभिर्दग्धो वियोनिमधि गच्छति ॥ ५४ ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ॥ ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ ५५ ॥ ११ ॥ शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते ॥ वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ॥ तमश्चाज्ञानजम्भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः ॥ स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति

वीति ॥ स्लोकः ॥ ६० ॥ अथ शिवामात्मोदात्तश्च हकारं स्वराणां यथा गौल्यचोरष्टष्टोदात्तं चापस्तु शंकरएकादश ॥ इतिवेदाङ्गनासिकाशिक्षा समाप्ता ॥

---